ओं अदृष्टाय नमः । अनल्पाय । अव्यवहार्याय । अद्वयाय । अनन्ताय । अविद्यारहिताय । अद्वैताय । अबाह्याय । अनन्तराय । अमात्राय । अनन्तमात्राय । अनामधेयाय । अमृताय । अजाय । अकारणाय । अनाभासाय । अनाधाराय । अनाश्रयाय । अशेषवेदान्तवेद्याय । अनिरुक्ताय नमः ।। १०० ।।

ओं अस्पृश्याय (अपृच्छ्याय) नमः । अव्ययाय । अनाद्यन्ताय । अप्रकृतये । अविक्रियाय । अनामयाय । अप्रमेयाय । अप्रमाणाय । अजिताय । अप्रमात्रे । अनामरूपाय । अननुज्ञाताय । अविकल्पाय । अनुज्ञैकरसाय । अखण्डैकरसाय । अहंब्रह्मास्मिरूपाय । अहंब्रह्मास्मिवर्जिताय । अशुभा(भ)शुभ-संकल्पाय । अणुस्थूलादिवर्जिताय । अन्तरात्मने नमः ।। १२०।।

ओं अपरिच्छिन्नाय नमः । अद्वयानन्दाय । अक्रियाय । अविद्याकायरहिताय । अन्तर्यामिणे । अखण्डाकार(श)बोधाय । अवाङ्मनसगोचराय । अखिलाकाराय । अजराय । अकलंकाय । अमराय । अकर्मणे । अखिलनादाय । अखिलातीताय । अक्षयाय । अखिलाण्डस्वरूपाय । अखिलव्यापकाय । अच्छेद्याय । अदाह्याय । अक्लेद्याय नमः ।। १४० ।।

ओं अशोष्याय नमः । असुराय । अचञ्चलाय । अतिदाय (अतीताय) । अतिशयाय । अविरोधाय । अतिसूक्ष्माय । अधिष्ठानाय । अत्त्रे (अन्त्रे) । अभिन्नाय । अतिसुन्दराय । अघनाशिने । अमलाकाराय । अबोध्याय । अनालस्याय । अनुस्यूताय । अविच्छिन्नाय । अघ(ग)घ्नाय । अनघाय । अन्तःप्र(प्रा)ज्ञाय नमः ।। १६० ।।

ओं अदृश्याय नमः । अविज्ञेयाय । अहमात्मने । अनीशाय । अहङ्कारविवर्जिताय । असाक्षिणे । अपारसाक्षिणे । असूयाहीनाय ।

अग्निसाक्षिणे । अव्याकृतरहिताय । अव्याकृतसाक्षिणे । अहंकृतिसाक्षिणे । असूयासाक्षिणे । अवच्छिन्नसाक्षिणे । अवच्छिन्नवर्जिताय । अलौकिकपरानन्दाय । अमलाकाशाय । अद्वितीयब्रह्मसंविदे । अविनाशात्मने । अतिवर्णाश्रमाय नमः ॥ १८० ॥

ओं अलक्ष्याय नमः । अन्तरङ्गाय । अक्षताय । अखिलोपाधिनिर्मुक्ताय । अध्यात्मकाय । अनाख्याय । अनभिव्यक्ताय । अभिव्यक्ताय । असत्यानन्दहीनाय । अन्तरादन्तराय । अतीतातीतभावाय । अज्ञानध्वान्तदीपाय । अनन्यभावसुलभाय । अन्यभावसुदूरगाय । अव्याजकरुणामूर्तये । अहेतुकदयांबुधये । अवस्थात्रयहीनाय । अवस्थात्रयसाक्षिणे । अस्मत्प्रत्यार्थाय । अहमःप्रकृतिसाक्षिणे नमः ॥ २०० ॥

ओं अस्मत्प्रत्ययसाक्षिणे नमः । अहंपदलक्ष्याय । अजकुक्षिस्थितगजसाम्यजगत्साक्षिणे । अखण्डामृततेजाराशये । अहंपरमार्थविषयाय । आदिमध्यान्तसू(शून्या)य । आकाशसदृश्याय । आत्मनाऽऽत्मनि तृप्ताय । आद्यन्तरहिताय । आत्मने । आनन्दाय । आधाराय । आदिकारणाय । आत्मारामाय । आप्तकामाय । आद्यन्ताभावाय । आत्मानन्दरसाय । आद्याय । आत्मभेदविवर्जिताय । आत्माकाराय नमः ॥ २२० ॥

ओं आत्मतीर्थाय नमः । आत्मरूपाय । आकाशशतपूर्णाय । आत्मानन्दप्रकाशाय । आनन्दात्मने । आकाशसाक्षिणे । आत्मशब्दार्थाय । आत्मशब्दहिताय । आनन्दमधु(ज)राय । आदिचैतन्यपात्राय । आत्मशब्दार्थवर्जिताय । आरूढज्ञानिहृदयनिवासाय । आशास्याय । आकाशनैल्यसदृशजगत्साक्षिणे । आशाहृतसुदूराय । आदित्यादिप्रकाशहेतवे । आरूढवेद्याय ।

आत्मानात्मभेदविवर्जिताय। आशाहीनचित्तवेद्याय। आनन्दामृत-सागराय नमः ॥ २४० ॥

ओं इष्टानिष्टविहीनाय नमः । इष्टानिष्टाय । इज्यारूपाय । इष्टाय । इच्छाहीनाय । इच्छासाक्षिणे । इन्द्रजालसाम्यलोकैक-साक्षिणे । ईश्वराय । ईप्सिताय । ईप्सितार्थप्रदाय । ईषणादि-विहीनाय । ईशानादिनमस्कृताय । ईक्षणाय । ईन्तरदुःशोधाय । ईदृगिति रहिताय । ईशसाक्षिणे । ईर्ष्याहीनाय । ईर्ष्यासाक्षिणे । ईशानादिशब्दरहिताय। ईषद्विद्युत्साम्यजगत्साक्षिणे नमः ॥ २६०

ओं ईशानादिसाक्षिणे नमः । उमारूपाय । उमासाक्षिणे । उमाधिष्ठानाय । उत्तमाय । उद्योगानन्दरहिताय । उपस्थेन्द्रिय-साक्षिणे । उमासहायाय । उपशान्ताय । उच्चनीचविवर्जिताय । उपस्थेन्द्रियहीनाय । उष्णानुष्णविवर्जिताय । उदुंबरफलप्रख्य-भौमलोकैकसाक्षिणे । उदानवायुसाक्षिणे । ऊहापोहविलक्षणाय । ऊर्ध्व(र्ध्वाधो)द्वाराय । ऊर्ध्वाधोविभागरहिताय । ऊर्ध्वसाम्यजगत्साक्षिणे। ऊर्ध्वाय। ऋताभासिजगत्साक्षिणे नमः ॥ २८० ॥

ओं ऋगाद्यागमवेद्याय नमः । एकस्मै । एकान्तसाक्षिणे । एकान्तप्रत्ययात्मने । एकानेकाय । एकसु(सू)प्ताय । एकानेक-विवर्जिताय । एकावस्थामातृजगत्साक्षिणे । एष्टव्याय । एकान्तसन्निहिताय । ऐकाराश्रयाय । ऐकाग्रसाक्षिणे । ऐकाग्रचित्तध्येयाय । ऐकाग्र्यविहीन-सत्यवद्भात जगत्साक्षिणे । ओंकारवाच्याय । ओंकारान्तरार्थाय । ओंकारैकसन्निधये । औदार्याय । औदासीन्याय । औपनिषदाय नमः ॥ ३०० ॥

ओं औदासीनैकसाक्षिणे नमः । औदासीन्यप्रकाशकाय । कर्मघ्नाय । केवलाय । कालाय । कामादिरहिताय । कल्याणाय ।

कर्मसाक्षिणे । कल्मषवर्जिताय । कठोरचित्तदूराय । कल्मषापहाय । कालातीताय । कालकालाय । कूटस्थाय । करुणाकराय । कलिदोषविहीनाय । कल्पातीताय । कल्पनारहिताय । कल्पसाक्षिणे । कल्पकवत्स्थिताय नमः ॥ ३२० ॥

ओं कार्यकारणनिर्मुक्ताय नमः । करुणानिधये । कार्यकारणरूपाय । करुणातीताय । करुणात्मने । कारणसाक्षिणे । कार्याश्व(न्व)मेधाय । कार्यकारणसाक्षिणे । कूटस्थसाक्षिणे । कृत्स्नाय । कार्योत्पत्तिनाशसाक्षिणे । कामविवर्जिताय । कामसाक्षिणे । क्रोधहीनाय । क्रोधसाक्षिणे । कृतार्थाय । कार्यानन्द(न्त)विहीनाय । कार्यानुतुदाय । कोपहीनाय । कोपसाक्षिणे नमः ॥ ३४० ॥

ओं कर्मत्रयविवर्जिताय नमः । कूर्मरोमोपमजगत्साक्षिणे । कर्मविवर्जिताय । कैवल्याय । कालवित्कालाय । कर्माध्यक्षाय । खण्डाण्डविहीनाय । खातौदैकसाक्षिणे । खसदृशाय । खसूक्ष्माय । खेगोल्लासविलाससाक्षिणे । खकुसुमसदृशजगत्साक्षिणे । गुरवे । गम्याय । गणनिधये । गमागमविवर्जिताय । गर्भहीनाय । गर्भसाक्षिणे । गुणानन्तविवर्जिताय । गुरुरूपाय नमः ॥ ३६० ॥

ओं गुणातीताय नमः । गुणत्रयसाक्षिणे । गन्तव्यदेशहीनाय । गन्तव्यदेशविवर्जिताय । ग्रामगोचराय । गुह्यागुह्याय । गुरुशिष्य-विहीनात्मने । गुह्यानन्दस्वरूपिणे । गुरुप्रसादलभ्याय । गन्ध-साक्षिणे । गंभीरैकस्वरूपाय । गुहेशाय । गणाधिपाय । गगनसमलोक-साक्षिणे । घ्राणविहीनाय । घ्राणसाक्षिणे । घनमोहतिमिरसूर्याय । घनविक्रमचण्डवाताय । घनाहंकारदूराय । चित्प्रकाशाय नमः ॥ ३८०

ओं चैत्याभ्न(चैतन्य)बाधरहिताय नमः । चिन्मात्राय । चित्तविवर्जिताय । चितये । चिदात्मने । चैतन्यरूपिणे । चेष्टाहीनाय ।

चित्स्वरूपाय । चेतःसाक्षिणे । चिन्मयाय । चिन्महनीयाय । चतुर्थाय । चतुर्थातीताय । चक्षुःस्रष्ट्रे । चक्षुषे । चिदानन्दाय । चिद्घनाय । चिद्विद्यायै(य) । चित्पराय । चिदानन्दलहर्यै नमः ॥ ४०० ॥

ओं चेतनाचेतनाहीनाय नमः । चैतन्यानन्दसन्दोहाय । चैतन्यदोषविवर्जिताय । चेतनाचेतनाधिष्ठानाय । चिदेकरसाय । चिज्ज्योतिषे । चिद्विलासाय । चैत्यबन्धविवर्जिताय । चिद्ब्रह्मैक्याय । चिदाकाशाय । चिदाकाराय । चिदाकृतये । चिदाभासविहीनाय । चिन्तनातीताय । चैत्यवर्जितद्विमात्राय । चित्तसाक्षिणे । चिदाभाससाक्षिणे । चिन्तानाशाय । चैतन्यमात्र संसा(सि)ध्याय । चित्प्रतिबिंबिताय नमः ॥ ४२० ॥

ओं चित्रतुल्यजगत्साक्षिणे नमः । चित्रप्रतिभासकाय । छान्दोग्योपनिषत्प्रतिपाद्याय । छन्दःस्वरूपाय । छन्दःसाराय । छन्दःस्वरूपाय । जन्महीनाय । ज्योतिर्मयाय । ज्यायसे । ज्योतिषांज्योतिषे । ज्वरनाशविहीनाय । जरामरणवर्जिताय । जनरूपाय । जयाय । जाग्रत्कल्पनारहिताय । जपाय । जप्याय । जगज्ज्योतिषे । जगज्जारा(ला)दिकारणाय । जगद्व्याप्याय नमः ॥ ४४० ॥

ओं जगन्नाथाय नमः । जगत्सृष्टिविवर्जिताय । जगदधिष्ठानाय । जीवाय । जन्मविनाशकाय । जगज्ज्ञान-विहीनाय । जीवत्वरहिताय । जलस्थपद्मसाम्यजगत्साक्षिणे । जीवभावरहिताय । जीवाधिष्ठानाय । जिह्वारहिताय । जीव-साक्षिणे । जनहृदयसाक्षिणे । जीवाधाराय । जीवाभिमानर-हिताय । जीव्यसाक्षिणे । जनातीताय । जीवचेष्टाविवर्जिताय । जीवावस्थासाक्षिणे । जगद्विलक्षणाय नमः ॥ ४६० ॥

ओं जगत्साक्षिणे नमः । जीवेश्वरजगत्साक्षिणे । जगदन्तर्गताय । जाग्रत्कल्पनासाक्षिणे । जीवेश्वरजगत्स्थितये । झङ्कारादिशब्दसाक्षिणे । ज्ञाननिष्कलरूपिणे । ज्ञानाज्ञानस्वरूपाय । ज्ञानाज्ञानविवर्जिताय । ज्ञानरूपाय । ज्ञानवेद्याय । ज्ञानानन्दप्रकाशाय । ज्ञानज्ञेयस्वरूपाय । ज्ञानिनां सुदुर्लभाय । ज्ञानाज्ञानसाक्षिणे । ज्ञानहीनसुदुर्लभाय । ज्ञानहीनचोराय । ज्ञानगम्याय । ज्ञान्यज्ञानिचित्तसाक्षिणे । ज्ञानाज्ञानतस्कराय नमः ॥ ४८०

ओं टापहीनाय नमः । टापसाक्षिणे । टापाटापविवर्जिताय । तत्त्वात्मने । तस्मै । तुभ्यं । तत्पराय । तन्मयाय । तत्त्वाय । तत्त्वस्वरूपाय । तत्त्वातत्त्वविवर्जिताय । तुषानलाग्नि तत्त्वस्वरूपाय । तत्त्वमर्थस्वरूपिणे । तेजःस्वरूपाय । ताराय । तुर्यातीताय । तारकाय । तत्पदलक्ष्याय । तुर्याय । तारकमन्त्रार्थरूपाय नमः ॥ ५०० ॥

ओं तूलभस्मसाम्यजगत्साक्षिणे नमः । तत्त्वसाक्षिणे । तत्त्वमस्यादिमहावाक्यवेद्याय । तापत्रयातीताय । त्रिपुटीसाक्षिणे । तारकब्रह्मणे । तेजोराशये । तैजससाक्षिणे । दिव्याय । दोषहीनाय । दृग्रूपाय । दर्भसाक्षिणे । द्रोहसाक्षिणे । द्रोहहीनाय । दर्पहीनाय । दिगंबराय । देवादिदेवाय । दमनिश्चयाय । देवशिखामणये । देशकालवस्तुपरिच्छेदनाय नमः ॥ ५२० ॥

ओं दम(टे)बोधाय नमः । दिव्यचक्षुषे । दिव्यज्ञानप्रदाय । दिव्यसंपूज्यरहिताय । दिव्यलक्षणाय । दृढनिश्चयहृद्द्योत्याय । दृढ(दीप)चित्तैकलभ्याय । देशकालवस्तुपरिच्छेदवर्ज्जानाय । द्रष्टृदर्शनदृश्यनिर्मुक्ताय । दीप्तये । धन्यानां सुलभाय । धराय । धर्माधर्माविवर्जिताय । धीराय । धरायै । ध्रुवाय । धैर्याय । धीरलभ्याय । धाम्ने । ध्यातृध्यानध्येयरूपाय नमः ॥ ५४० ॥

ओं धूतसंसारबन्धाय नमः । ध्यतृध्यानविहीनाय । धीसाक्षिणे । ध्येयवर्जिताय । ध्यातृध्यानसाक्षिणे । धीवेद्याय । ध्यानाय । धात्रे । ध्येयाय । ध्येयध्यातृध्यानकल्पनाधिष्ठनाय । निर्वाणाय । निरीहाय । निरीप्सिताय । नित्याय । निरवद्याय । निष्क्रियाय । निरंजनाय । निर्मलाय । निर्विकल्पाय । निराभाना(सा)य नमः ॥ ५६० ॥

ओं निश्चलाय नमः । निर्विकाराय । नित्यव्रताय । निर्गुणाय । निस्सहाय । निरिन्द्रियाय । नियन्त्रे । निरपेक्षाय । निष्कलाय । निराकृतये । निरालंबाय । निजरूपाय । निरामयाय । निष्टेष्टानिष्टकलनाय । नाथाय । नित्यमङ्गलाय । निदानाय । नित्यतृप्ताय । निरावरणाय । निरूपस्वरूपाय नमः ॥ ५८० ॥

ओं निस्सहाय(ाय) नमः । निरुपाधिकाय । नित्यप्रकाशाय । निश्चिन्ताय । निर्लक्ष्याय । निरन्तराय । नामरूपविहीनात्मने । नियोनये । निर्भयाय । निष्कलात्मने । नायकाय । निवेद्याय । निरास्पदाय । निर्या(र्वा)णेत्यादिवाच्याय । निर्वन्धाय । निरुपप्लवाय । निर्मलात्मने । निरानन्दाय । नादान्तज्योतिषे । निरंकुशस्वरूपाय नमः ॥ ६०० ॥

ओं नेतिनेतिवाक्यावयसे नमः । नरशृङ्गोपमजगत्साक्षिणे । नित्यचिद्धनाय । निष्प्रपञ्चपराय । निष्प्रपञ्चग्रहाय । निष्प्रपञ्चाघननाकस्य सूचकाय । निर्लेपाय । निष्प्रपञ्चछत्रयुक्ताय । निष्प्रपञ्चासनस्थिताय । निष्प्रपञ्चमहामालाय । निष्प्रपञ्चात्मचन्दनाय । निष्प्रपञ्चप्रभूषणाय । निष्प्रपञ्चसुतांबूलाय । निष्प्रपञ्चसुखस्थिराय । निष्प्रपञ्चमहद्धाम्ने । निष्प्रपञ्चशिवाकाराय । निष्प्रपञ्चजलस्नानाय । निष्प्रपञ्चकतर्पणाय । निष्प्रपञ्चमहामन्त्रिणे । निष्प्रपञ्चजपाय नमः ॥ ६२०

ओं निष्प्रपञ्चगजारूढाय नमः । निष्प्रपञ्चाश्ववाहनाय । निष्प्रपञ्चमहाराज्याय । निष्प्रपञ्चयुतादिमते । निष्प्रपञ्चमहादेवाय । निष्प्रपञ्चात्मभावनाय । निष्प्रपञ्चमहानिद्राय । निष्प्रपञ्चस्वभावकाय । निष्प्रपञ्चजीवात्मने । निष्प्रपञ्चकलेवराय । निष्प्रपञ्चपरीवाराय । निष्प्रपञ्चनित्योत्सवाय । निष्प्रपञ्चककल्याणाय । निष्प्रपञ्चकतर्पणाय । निष्प्रपञ्चकाराध्याय । निष्प्रपञ्चकविचारणाय । निष्प्रपञ्चविहाराद्याय । निष्प्रपञ्चप्रदीपाय । निष्प्रपञ्चप्रपूर्णाय । निष्प्रपञ्चारिमर्दनाय नमः ॥ ६४०

ओं प्राणानन्दैकबोधनाय नमः । प्रत्यगेकैकरसाय । प्रज्ञानाय । प्रसन्नाय । प्रकाशाय । परमेश्वराय । परमाय । परमात्मने । प्रणवान्तर्गताय । परिपूर्णाय । परापरविवर्जिताय । प्रपञ्चरहिताय । प्रज्ञाय । प्रज्ञानघनाय । प्रज्ञानाय । परमानन्दाय । पश्यते । पुरुषोत्तमाय । परायै काष्ठायै । परगुरवे नमः ॥ ६६० ॥

ओं प्रत्यक्षाय नमः । परमाद्भुताय । प्रज्ञानाय । परस्मै ज्योतिषे । पशुपाशविमोचनाय । पराकाशाय । पशुपतये । पञ्चनदेश्वराय । परिपूर्णज्ञानाय । पञ्चनदस्वरूपिणे । पञ्चकोश-स्वरूपाय । पूर्णानन्दैकविग्रहाय । परब्रह्मणे । परशिवाय । परप्रेमास्पदाय । प्रत्यकुचितये । परस्मै धाम्ने । परापरज्ञानशूराय । पञ्चब्रह्मस्वरूपिणे । प्रपञ्चोपशमनाय नमः ॥ ६८० ॥

ओं परमार्थज्ञानाय । प्रसन्नाय । परदैवताय । पञ्चावस्था-साक्षिवर्जिताय । पञ्चप्रेतासनाय । पञ्चप्राणस्वरूपाय । प्रणवार्थस्वरूपिणे । प्रपञ्चसाक्षिणे । प्ररूढाय । परत्रयविलक्षणाय । पञ्चेन्द्रियस्वरूपाय । पञ्चावस्थाविलंघिताय । प्रत्यक्परोक्षरहिताय । पञ्चकोशादिसाक्षिणे । पञ्चकोशाधिष्ठानाय । पञ्चकोशान्तर-स्थिताय । परमार्थैकवेद्याय । पुण्यापुण्यविवर्जिताय । परिशुद्धाय । परब्रह्मणे नमः ॥ ७०० ॥

ओं प्रणवैकस्वरूपिणे नमः । परमार्थाय । परगतये । प्रभवे । प्राणाय । प्रत्यगभिन्नब्रह्मणे । परसच्चित्सुखात्मकाय । प्रपञ्चनिर्मुक्ताय । पावनाय । परवस्तुने । प्रज्ञाय । परमसुखदाय । पुण्याय । पापविनाशनाय । परमाय पदाय । पुंसे । पुरारये । परमकृपाकराय । पुण्यलभ्याय । पुष्कलाय नमः ।। ७२० ।।

ओं परमोदाराय नमः । प्रियात्मने । प्राणनायकाय । पुण्यापुण्यस्वरूपाय । पूर्वाय । परमसाम्याय । पूर्वपुण्यैकलभ्याय । पारमार्थिकविवर्जिताय । परगांभीर्यवते । पूर्वपुण्यहीनसुदुर्लभाय । पुरत्रयसाक्षिणे । पुरत्रयरूपाय । परमामृतधाम्ने । परोन्नतिमते । परमसन्तोषाय । परनिर्वाणतृप्तये । प्रातिभासिकहीनाय । प्रातिभासिकसाक्षिणे । पुरातीताय । प्राज्ञसाक्षिणे नमः ।। ७४०

ओं प्राज्ञहीनाय नमः । प्रतिबन्धत्रयीहीनाय । पादेन्द्रियसाक्षिणे । पद्मपत्रजलप्रायजगतीसाक्षिणे । पाय्विन्द्रियादिसाक्षिणे । प्राज्ञतैजस-वर्जिताय । फाललोचनादिसाक्षिणे । ब्रह्मविद्यायै । बृहद्रूपाय । बलिने । ब्रह्मविवर्जिताय । ब्रह्मविप्रज्ञाय । ब्रह्मविद्यासंप्रदायरक्षकाय । बृहत्कोशाय । ब्रह्मणे । ब्रह्मचैतन्याय । बलप्रदाय । ब्रह्मज्ञानैकलभ्याय । बन्धमोक्षविवर्जिताय । ब्रह्मज्ञानतोयाय नमः ।। ७६० ।।

ओं ब्रह्माधिपतये नमः । ब्रह्मानन्दाय । ब्रह्मानन्दरम्याय । ब्रह्मात्मकाय । ब्रह्माकारवृत्तिविषयाय । ब्रह्मसंस्थिताय । ब्रह्मज्ञानस्वरूपाय । ब्रह्मविद्रूपाय । ब्रह्मविदे । ब्रह्मरूपाय । भवचक्रप्रवर्तकाय । भाग्यलभ्याय । भागधेयाय । भूमानन्द-स्वरूपिणे । भूतपतये । भूम्ने । भवरोगचिकित्सकाय । भावाभाव-कलाहीनाय । भगवते । भवमोचकाय नमः ।। ७८०

ओं भवध्वंसकाय नमः । भारूपाय । भीतिनिवर्तकाय । भोक्तृभोज्यभोगरूपाय । भावनालंघिताय । भाववर्जित-चिन्मात्राय ।

भाषाहीनाय । भोक्तृभोग्यभोगसाक्षिणे । भ्रमाविष्टाय । भृष्टबीजसदृशजगत्साक्षिणे । भवहीनाय रम्यप्रध्वंसिने । महाकाशाय रम्यमहते । महाकर्त्रे । महाभोक्त्रे । महात्यागिने रम्यमहामुनये । मुक्तामुक्तस्वरूपात्मने । मुक्तामुक्तविवर्जिताय । महात्मने । महादेवाय । महर्षये नमः ॥ ८०० ॥

ओं मूलकारणाय नमः । महानन्दाय । मनोऽतीताय । मूलाज्ञानविनाशनाय । महानन्दभावाय । मायाभासविवर्जिताय । महाग्रासाय । महत्सेव्याय । महामोहविनाशनाय । महर्षिप्रज्ञाय । मोक्षात्मने । मूलचैतन्याय । मोक्षामोक्षस्वरूपाय । मिथ्यानन्द-प्रकाशकाय । महावाक्यलक्ष्याय । महावाक्यार्थरूपिणे । महत्पदाय । महामूर्तये । महच्छब्दविवर्जिताय । मूलस्वरूपाय नमः ॥ ८२० ॥

ओं मोचकैकस्वरूपिणे नमः । महाशब्दात्मकाय । मायाहीनाय । मनोहराय । मायाधिष्ठानाय । मायिने । मायावशंकराय । मायानुताय । मध्यगताय । मूर्खचित्तसुदुर्लभाय । मायावश्याय । महच्चित्तसुलभाय । माधवाय । मायातत्कार्यसाक्षिणे । मात्सर्यादिविवर्जिताय । मध्यस्थाय । मन्त्रसाध्याय । महाप्रलयसाक्षिणे । माणिक्यवत्स्वयंज्योतिषे । मनःसाक्षिणे नमः ॥ ८४० ॥

ओं महासिद्धये नमः । मात्सर्यसाक्षिणे । मात्सर्यविहीनाय । मोहहीनाय । मदविवर्जिताय । मोहसाक्षिणे । महामायाविने । महत्साक्षिणे । मृगतृष्णासदृशजगदधिष्ठानाय । मलरहिताय । मायाप्रतिबिंबितसाक्षिणे । मानहीनाय । याजमान्यविहीनाय । यज्ञरूपाय । यजमानाय । योगरूपाय । योगविधिस्वरूपाय । यजनयाजनरूपाय । यजनयाजनसाक्षिणे । रागहीनाय नमः ॥ ८६० ॥

ओं रागसाक्षिणे नमः। रम्याय। रूपप्रसाक्षिणे। रज्जुसर्पजगत्साक्षिणे । रससाक्षिणे। रसाय। लक्ष्यालक्ष्यस्वरूपाय । लक्ष्यालक्ष्यविवर्जिताय। लाभवृद्धिविवर्जिताय। लक्ष्याय। लक्ष्यालक्ष्यसाक्षिणे । लोभसाक्षिणे। लक्षणत्रयविज्ञानाय। लयहीनाय। वृत्तिशून्यसुखात्मने। वयोऽवस्थाविवर्जिताय। विश्वातीताय। विश्वसाक्षिणे। वर्णाश्रमविवर्जिताय। विष्णवे नमः ॥ ८८० ॥

ओं वरेण्याय नमः। विज्ञानाय। विरजसे। विश्वतोमुखाय। वासुदेवाय । विमुक्ताय। विदिताविदितात्पराय। विकल्पाविकल्पसाक्षिणे । विकल्पसाक्षिणे। विज्ञानविष्वग्ज्ञानाय सच्चिदानन्दाय । विद्वज्ज्ञेयाय। वृत्तिशून्याय । वृत्तिवेद्याय। विषयानन्दवर्जिताय। वृत्तिकल्पनाधिष्ठानाय। वाक्साक्षिणे। वेदरूपिणे। वास(ही)नाय । वेदान्तवेद्याय। वेदैकस्वरूपिणे नमः ॥ ९००

ओं वचनहीनाय नमः। वचनसाक्षिणे। वृष्टिसाक्षिणे। विराट्स्वरूपाय। विदुषे। व्यष्टिविवर्जिताय। विराड्भावरहिताय । विकल्पदूराय। विराट्साक्षिणे। विश्वचक्षुषे । विश्वहीनाय। विश्वात्मने। वन्ध्यासुतसदृशजगत्साक्षिणे। विशुद्धरूपाय। शुद्धाय। शक्राय। शान्ताय । शाश्वताय। शिवाय । शून्यविहरणाय नमः ॥ ९२० ॥

ओं शोभनाशोभमानाय नमः। शंकराद्वैतवन्द्याय। शुद्धाशुद्धविवर्जिताय। शुक्तिरूप्यसाम्यजगत्साक्षिणे। श्रेयसे। श्रेष्ठिने। शुभ्राय। शून्याय। शंकराय। शब्दब्रह्मणे। शरदाकाशसदृशाय। शुद्धचैतन्यरूपिणे। शैवागमविदे शिवाय। शशाङ्कतुल्यजगत्साक्षिणे सच्चिदात्मकाय। षडाधारस्वरूपाय । षट्कोशरहिताय। षड्र्मिवर्जिताय । षडाधारविलंघिताय। षट्शास्त्रलंघिताय। षण्मतातीताय नमः ॥ ९४० ॥

ओं षडाधारसाक्षिणे नमः । षट्शास्त्रैकरहस्यविदे । सदसद्भेदहीनाय । संकल्परहिताय । सदाविचाररूपाय । सर्वेन्द्रियविवर्जिताय । सर्वाय । सच्चिदानन्दाय । साक्ष्यसाक्षित्व-वर्जिताय । सर्वप्रकाशरूपाय । सर्वसंबन्धवर्जिताय । संभेद-रूपाय । सर्वभूतान्तरस्थिताय । सर्वेश्वराय । सर्वसाक्षिणे । सर्वानुभूताय । सुखस्वरूपाय । साक्षिहीनाय । सदाशिवाय । सदोदिताय नमः ।। ९६० ।।

ओं सर्वकर्त्रे नमः । सर्वगाय । सनातनाय । सन्मात्राय । सद्घनाय । सर्वव्यापिने । सर्वविलक्षणाय । सर्वातीताय । सर्वभर्त्रे । सर्वस्तोत्रविवर्जिताय । सुखातीताय । सुखारंभाय । स्वभापाय । सुखवारिधये । सुखलयाय । स्वयंज्योतिषे । सर्वत्रावस्थिताय । स्वयंभुवे । संसारहेतवे । स्वभाय नमः ।। ९८० ।।

ओं संकल्पसाक्षिणे नमः । सर्वशान्ताय । सर्वशक्ताय । स्वतन्त्राय । सर्वशक्तिमते । स्थूलसाक्षिणे । सूक्ष्मसाक्षिणे । स्वप्नकल्पितवर्जिताय । समानसाक्षिणे । स्वरूपानन्दाय । स्पर्शसाक्षिणे । स्वप्नकल्पनासाक्षिणे । समष्टिरहिताय । समष्टिव्यष्टिहीनाय । सत्तामात्रस्वरूपिणे । सुषुप्तिकल्पनाहीनाय । सर्वकर्मकर्त्रे । सुषुप्तिकल्पनासाक्षिणे । सच्चिदानन्दवर्जिताय । सर्वानुभवरूपाय नमः ।। १०००

ओं सर्वानुभवसाक्षिणे नमः । समग्राग्रगुणाधारसत्यलीलाय । सर्वसंकल्परहिताय । सर्वसंकल्पसाक्षिणे । सर्वसंज्ञाविहीनाय । सर्वसंज्ञाति(ज्ञप्ति)साक्षिणे । सांख्यवित्पूर्णाय । सर्वशक्त्युपबृंहिताय । सुरवासनाय । स्वयंब्रह्मणे । सर्वपापशमाय । संशान्तदुःखाय । सिद्धान्तरहस्याय । सर्वगोचराय । सर्वसंकल्पजालशून्याय ।

सुखात्सुखाय । सर्वकल्पनातीताय । साक्षिनुताय । स्वानन्दाय । सर्ववित्सर्वाय नमः ॥ १०२० ॥

ओं सर्ववाक्यविवर्जिताय नमः । सकलनिष्कलरूपाय । सकलनिष्कलसाक्षिणे । सर्वप्रकृतिविहीनात्मने । सर्वसिद्धिविवर्धनाय । सर्वशास्त्रार्थसिद्धान्ताय । सर्वसंपूर्णविग्रहाय । स्वानुभूत्येकमानाय । सर्वचित्तानुगाय । स्वप्नतुल्यजगत्साक्षिणे । सर्वकृते । सूक्ष्मधियें । समाय । समरससाराय । सर्वमननफलाय । सकृद्विभाना(ता)य । संशान्ताय । सूक्ष्माय । सङ्गहीनाय । सर्वप्रत्ययसाक्षिणे नमः ॥ १०४०

ओं सर्वान्तरज्ञाय नमः । सुसन्तुष्टाय । सर्वप्रत्ययवर्जिताय । स्वप्रकाशाय । सदानन्दाय । सर्वप्राणिमनोहराय । साधुप्रियाय । साधुप्रज्ञाय । स्वाद्वस्वादुविवर्जिताय । स्वाद्वस्वादुप्रदीपकाय । सर्वज्ञाय । सर्वसंपूर्णाय । सर्वसन्तोषसाक्षिणे । संसारार्णवनिर्मुक्त-समुद्धरणकौशलाय । स्वात्मानन्दकणीभूतब्रह्माद्यानन्दसन्ततये । हस्तहीनाय । हिरण्यगर्भसाक्षिणे । हिरण्यगर्भरूपाय । हेयोपादेयवर्जिताय । हंसमन्त्रार्थरूपाय नमः ॥ १०६० ॥

ओं हर्षशोकप्रसाक्षिणे नमः । हंसाय । हंसभावनाय । क्षुद्र(क्षंत्र)जगत्साक्षिणे । क्षराक्षरविवर्जिताय । क्षान्तिमच्चित्तसुलभाय । क्षान्तिहीनसुदूराय । क्षेत्रज्ञाय । क्षेत्रस्वरूपिणे । क्षेत्राधिष्ठानाय । विष(षु)वल्लोकसाक्षिणे । क्षान्ताय ॥ (१०७२)

ओं ब्रह्मानन्दस्वामिने नमः । आत्मानन्दस्वामिने नमः । अश्वनाथस्वामिने नमः ।

*—*—*



பரிசு தீட்டை



பூவார் அடிச்சுவடு பொறித்தல்



நயன தீட்சையும் உபதேசமும்

# योगनायिकासहस्रनामस्तोत्रम्

## (राजराजेश्वरीसहस्रनामस्तोत्रम्)

## (राकारादिरकारान्ताद्याक्षरघटितम्

राजराजेश्वरी राजरक्षकी राजनर्तकी ।
राजविद्या राजपूज्या राजकोशसमृद्धिदा ॥ १

राजहंसतिरस्कारिगमना राजलोचना ।
राज्ञां गुरुवराराध्या राजयुक्तनटाङ्गना ॥ २

राजगर्भा राजकन्दकदलीसक्तमानसा ।
राज्ञां कविकुलाख्याता राजरोगनिवारिणी ॥ ३

राजौषधिसुसम्पन्ना राजनीतिविशारदा ।
राज्ञां सभालङ्कृताङ्गी राजलक्षणसंयुता ॥ ४

राजद्दला राजवल्ली राजत्तिल्ववनाधिपा ।
राजसद्गुणनिर्दिष्टा राजमार्गरथोत्सवा ॥ ५

राजचक्राङ्कितकरा राजांशा राजशासना ।
राजत्कृपा राजलक्ष्मीः राजत्कञ्चुकधारिणी ॥ ६

राजाहङ्कारशमना राजकार्यधुरन्धरा ।
राजाज्ञा राजमातङ्गी राजयन्त्रकृतार्चना ॥ ७

राजक्रीडा राजवेश्मप्रवेशितनिजाश्रिता ।
राजमन्दिरवास्तव्या राजस्त्री राजजागरा ॥ ८

राजशापनिविर्मुक्ता राजश्री राजमन्त्रिणी ।
राजपुत्री राजमैत्री राजान्तःपुरवासिनी ॥ ९

राजपापविनिर्मुक्ता राजर्षिपरिसेविता ।
राजोत्तममृगारूढा राज्ञस्तेजःप्रदायिनी ॥ १०

राजार्चितपदाम्भोजा राजालङ्कारवेष्टिता ।
राजसूयसमाराध्या राजसाहस्रसेविता ॥ ११

राजसन्तापशमनी राजशब्दपरायणा ।
राजार्हमणिभूषाढ्या राजच्छृङ्गारनायिका ॥ १२

राजद्रुमूलसंराजद्विघ्नेशवरदायिनी ।
राजपर्वतकौमारी राजशौर्यप्रदायिनी ॥ १३

राजाभ्यन्तःसमाराध्या राजमौलिमनस्विनी ।
राजमाता राजमाषप्रियार्चितपदाम्बुजा ॥ १४

राजारिमर्दिनी राज्ञी राजत्कल्हारहस्तका ।
रामचन्द्रसमाराध्या रामा राजीवलोचना ॥ १५

रावणेश समाराध्या राकाचन्द्रसमानना ।
रात्रिसूक्तजपप्रीता रागद्वेषविवर्जिता ॥ १६

रिङ्खन्नूपुरपादाब्जा रिट्याादिपरिसेविता ।
रिपुसङ्घकुलध्वान्ता रिगमस्वरभूषिता ॥ १७

रुक्मिणीशसहोद्भूता रुद्राणी रुरुभैरवी ।
रुग्घन्त्री रुद्रकोपाग्निशमनी रुद्रसंस्तुता ॥ १८

रुषानिवारिणी रूपलावण्याम्बुधिचन्द्रिका ।
रूप्यासनप्रिया रूढा रूप्यचन्द्रशिखामणिः ॥ १९

रेफवर्णगला रेवानदीतीरविहारिणी ।
रेणुका रेणुकाराध्या रेवोर्ध्वकृतचक्रिणी ॥ २०

रैणुकेयाख्यकल्पोक्तयजनप्रीतमानसा ।
रोमलम्बितविध्यण्डा रोमन्थमुनिसेविता ॥ २१

रोमावलिसुलावण्यमध्यभागसुशोभिता ।
रोचनागरुकस्तूरीचन्दनश्रीविलेपिता ॥ २२

रोहिणीशकृतोत्तंसा रोहिणीपितृवन्दिता ।
रोहिताश्वसुसंभूता रौहिणेयानुजार्चिता ॥ २३

रौप्यसिंहासनारूढचाक्षुष्मन्मन्त्रविग्रहा ।
रौद्रमन्त्राभिषिक्ताङ्गी रौद्रमध्यसमीडिता ॥ २४

रौरवान्तकरी रौच्यपत्रपुष्पकृतार्चना ।
रङ्गलास्य कृतालोला रङ्गवल्ल्याद्यलङ्कृता ॥ २५

रञ्जक श्रीसभामध्य गायकान्तरवासिनी ।
ललिता लड्डुकप्रीतमानसस्कन्दजन्मभूः ॥ २६

लकारत्रययुक्त श्रीविद्यामन्त्रकदम्बका ।
लक्षणा लक्षणाराध्या लक्षबिल्वार्चनप्रिया ॥ २७

लज्जाशीला लक्षणज्ञा लकुचान्नकृतादरा ।
ललाटनयनार्धाङ्गी लवङ्गत्वक्सुगन्धवाक् ॥ २८

लाजहोमप्रिया लाक्षागृहे कौन्तेयसेविता ।
लाङ्गली लालना लाला लालिका लिङ्गपीठगा ॥ २९

लिपिव्यष्टिसमष्टिज्ञा लिपिन्यस्त त्रिणेत्रभृत् ।
लुङ्गाफलसमासक्ता लुलायासुरघातुकी ॥ ३०

लूतिकापतिसंपूज्या लूताविस्फोटनाशिनी ।
लृलॄवर्णस्वरूपाढ्या लेखिनी लेखकप्रिया ॥ ३१

लेह्यचोष्यपेयखाद्यभक्ष्यभोज्यादिमप्रिया ।
लेपितश्रीचन्दनाङ्गी लैङ्गमार्ग प्रपूजिता ॥ ३२

लोलम्बिरत्नहाराङ्गी लोलाक्षी लोकवन्दिता ।
लोपामुद्रार्चितपदा लोपामुद्रापतीडिता ॥ ३३

लोभकामक्रोधमोह मदमात्सर्यवारिता ।
लोहजप्रतिमायन्त्रवासिनी लोकरञ्जिनी ॥ ३४

लोकवेद्या लोलडोलास्थितशम्भुविहारिणी।
लोलजिह्वापरिताङ्गी लोकसंहारकारिणी॥ ३५

लौकिकीज्याविदूरस्था लङ्केशानसुपूजिता।
लम्पटा लम्बिमालाभिनन्दिता लवलीधरा॥ ३६

वक्रतुण्डप्रिया वज्रा वधूटी वनवासिनी।
वधूर्वचनसन्तुष्टा वत्सला वटुभैरवी॥ ३७

वटमूलनिवासार्धा वरवीराङ्गनावृता।
वनिता वर्धनी वर्ष्या वरालीरागलोलुपा॥ ३८

वलयीकृतमाहेशकरसौवर्णकन्धरा।
वराङ्गी वसुधा वप्रकेलिनी वणिजा(जां)वरा॥ ३९

वपुरायितश्रीचक्रा  वरदा वरवर्णिनी।
वराहवदनाराध्या वर्णपञ्चदशात्मिका॥ ४०

वसिष्ठाच्र्या वल्कलान्तर्हितरम्यस्तनद्वयी।
वशिनी वल्लकी वर्णा वर्षाकालप्रपूजिता॥ ४१

वल्ली वसुदलप्रान्तवृत्तकट्याश्रितादरा।
वर्गा वरवृषारूढा वषण्मन्त्रसुसंज्ञका॥ ४२

वलयाकारवैडूर्य वरकङ्कणभूषणा।
वज्राश्चितशिरोभूषा वज्रमाङ्गल्यभूषिता॥ ४३

वाग्वादिनी वामकेशी वाचस्पतिवरप्रदा।
वादिनी वागधिष्ठात्री वारुणी वायुसेविता॥ ४४

वात्स्यायनसुतन्त्रोक्ता वाणी वाक्यपदार्थजा।
वाद्यघोषप्रिया वाद्यवृन्दारम्भनटोत्सुका॥ ४५

वापीकूपसमीपस्था वार्ताली वामलोचना।
वास्तोष्पतीड्या वामाङ्घ्रिधृतनूपुरशोभिता॥ ४६

वामा वाराणसीक्षेत्रा वाडबेयवरप्रदा ।
वामाङ्गा वाञ्छितफलदात्री वाचालखण्डिता ॥ ४७

वाच्यवाचकवाक्यार्था वामना वाजिवाहना ।
वासुकीकण्ठभूषाढ्यवामदेव प्रियाङ्गना ॥ ४८

विजया विमला विश्वा विग्रहा विधृताङ्कुशा ।
विनोदवनवास्तव्या विभक्ताण्डा विधीडिता ॥ ४९

विक्रमा विषजन्तुघ्नी विश्वामित्रवरप्रदा ।
विश्वम्भरा विष्णुशक्तिर्विजिज्ञासा विचक्षणा ॥ ५०

विटङ्कत्यागराजेन्द्रपीठसंस्था विधीडिता ।
विदिता विश्वजननी विस्तारितचमूबला ॥ ५१

विद्या विनयसम्पन्ना विद्याद्वादशनायिका ।
विभाकरात्यर्बुदाभा विधात्री विन्ध्यवासिनी ॥ ५२

विरूपाक्षसखी विश्वनाथवामोरुसंस्थिता ।
विशल्या विशिखा विघ्ना विप्ररूपा विहारिणी ॥ ५३

विनायकगुहक्रीडा विशालाक्षी विरागिणी ।
विपुला विश्वरूपाख्या विषघ्नी विश्वभामिनी ॥ ५४

विशोका विरजा विप्रा विद्युल्लेखेव भासुरा ।
विपरीतरतिप्रीतपतिर्विजयसंयुता ॥ ५५

विरिञ्चिविष्णुवनिताधृतचामरसेविता ।
वीरपानप्रिया वीरा वीणापुस्तकधारिणी ॥ ५६

वीरमार्ताण्डवरदा वीरबाहुप्रियङ्करी ।
वीराष्टाष्टकपरीता वीरशूरजनप्रिया ॥ ५७

वीजितश्रीचामरधृल्लक्ष्मीवाणीनिषेविता ।
वीरलक्ष्मीर्वीतिहोत्रनिटिला वीरभद्रका ॥ ५८

वृक्षराजसुमूलस्था वृषभध्वजलाञ्छना ।
वृषाकपायी वृत्तज्ञा वृद्धा वृत्तान्तनायिका ॥ ५९

वृत्तवर्णाङ्गविन्यासा वेणीकृतशिरोरुहा ।
वेदिका वेदविनुता वेतण्डकृतवाहना ॥ ६०

वेदमाता वेगहन्त्री वेतसीगृहमध्यगा ।
वेतालनटनप्रीता वेङ्कटाद्रिनिवासिनी ॥ ६१

वेणुवीणामृदङ्गादि वाद्यघोषविशारदा ।
वेषिणी वैनतेयानुकम्पिनी वैरिनाशिनी ॥ ६२

वैनायकी वैद्यमाता वैष्णवी वैणिकस्वना ।
वैजयन्तीष्टवरदा वैकुण्ठवरसोदरी ॥ ६३

वैशाखपूजिता वैश्या वैदेही वैद्यशासिनी ।
वैकुण्ठा वैजयन्तीड्या वैयाघ्रमुनिसेविता ॥ ६४

वैहायसीनटीरासा वौषट्श्रौषट् स्वरूपिणी ।
वन्दिता वङ्गदेशस्था वंशगानविनोदिनी ॥ ६५

वप्रचादिरक्षिका वह्निर्वन्दारुजन वत्सला ।
वन्दिताखिललोकश्रीः वक्षःस्थलमनोहरा ॥ ६६

शर्वाणी शरभाकारा शम्रजन्मानुरागिणी ।
शङ्करी शमिताघौघा शक्ता शतकरार्चिता ॥ ६७

शची शरावती शक्रसेव्या शयितसुन्दरी ।
शरभृच्छबरी शक्तिमोहिनी शणपुष्पिका ॥ ६८

शकुन्ताक्षी शकाराख्या शतसाहस्रपूजिता ।
शब्दमाता शतावृत्तिपूजिता शत्रुनाशिनी ॥ ६९

शतानन्दा शतमुखी शमीबिल्वप्रिया शशी ।
शनकैः पदविन्यस्त प्रदक्षिणनतिप्रिया ॥ ७०

शातकुम्भाभिषिक्ताङ्गी शातकुम्भस्तनद्वयी ।
शातातपमुनीन्द्रेड्या शालवृक्षकृतालया ॥ ७१

शासका शाकरप्रीता शाला शाकंभरीनुता ।
शार्ङ्गपाणिबला शास्तृजननी शारदाम्बिका ॥ ७२

शापमुक्तमनुप्रीता शाबरीवेषधारिणी ।
शाम्भवी शाश्वतैश्वर्या शासनाधीनवल्लभा ॥ ७३

शास्त्रतत्त्वार्थनिलया शालिवाहनवन्दिता ।
शार्दूलचर्मवास्तव्या शान्तिपौष्टिकनायिका ॥ ७४

शान्तिदा शालिदा शापमोचिनी शाडवप्रिया ।
शारिका शुकहस्तोर्ध्वा शाखानेकान्तरश्रुता ॥ ७५

शाकलादिमऋक्शाखामन्त्रकीर्तितवैभवा ।
शिवकामेश्वराङ्कस्था शिखण्डिमहिषी शिवा ॥ ७६

शिवारम्भा शिवाद्वैता शिवसायुज्यदायिनी ।
शिवसङ्कल्पमन्त्रेड्या शिवेन सह मोदिता ॥ ७७

शिरीषपुष्पसङ्काशा शितिकण्ठकुटुम्बिनी ।
शिवमार्गविदां श्रेष्ठा शिवकामेशसुन्दरी ॥ ७८

शिवनाट्यपरीताङ्गी शिवज्ञानप्रदायिनी ।
शिवनृत्तसदालोकमानसा शिवसाक्षिणी ॥ ७९

शिवकामाख्यकोष्ठस्था शिशुदा शिशुरक्षकी ।
शिवागमैकरसिका शिक्षितासुरकन्यका ॥ ८०

शिल्पिशालाकृतावासा शिखिवाहा शिलामयी ।
शिंशपावृक्षफलवद्भिन्नानेकारिमस्तका ॥ ८१

शिरःस्थितेन्दुचक्राङ्का शितिकुम्भसुमप्रिया ।
शिञ्जन्नूपुरभूषात्तकृतमन्मथभेरिका ॥ ८२

शिवेष्टा शिबिकारूढा शिवारावाभयङ्करी।
शिरोर्ध्वनिलयासीना शिवशक्त्यैक्यरूपिणी ॥ ८३

शिवासनसमाविष्टा शिवार्च्या शिववल्लभा।
शिवदर्शनसन्तुष्टा शिवमन्त्रजपप्रिया ॥ ८४

शिवदूती शिवानन्या शिवासनसमन्विता।
शिष्याचरितशैलेशा शिवगानविगायिनी ॥ ८५

शिवशैलकृतावासा शिवाम्बा शिवकोमला।
शिवगङ्गासरस्तीर प्रत्यङ्मन्दिरवासिनी ॥ ८६

शिवाक्षरारम्भपञ्चदशाक्षरमनुप्रिया।
शिखादेवी शिवाभिन्ना शिवतत्वविमर्शिनी ॥ ८७

शिवालोकनसन्तुष्टा शिवार्धाङ्गसुकोमला।
शिवरात्रिदिनाराध्या शिवस्य हृदयंगमा ॥ ८८

शिवरूपा शिवपरा शिववाक्यार्थबोधिनी।
शिवार्चनरता शिल्पलक्षणा शिल्पिसेविता ॥ ८९

शिवागमरहस्योक्ता शिवोहंभावितान्तरा।
शिंबीजश्रवणानन्दा शिमन्तर्नाममन्त्रराट् ॥ ९०

शीकारा शीतला शीला शीतपङ्कजमध्यगा।
शीतभीरुः शीघ्रगन्त्री शीर्षका शीकरप्रभा ॥ ९१

शीतचामीकराभासा शीर्षोद्धूपितकुन्तला।
शीतगङ्गाजलस्नाता शुका(क्रा)राधितचक्रगा ॥ ९२

शुक्रपूज्या शुचिः शुभ्रा शुक्तिमुक्ता शुभप्रदा।
शुच्यन्तरङ्गा शुद्धाङ्गी शुद्धा शुकी शुचिव्रता ॥ ९३

शुद्धान्ता शूलिनी शूर्पकर्णाम्बा शूरवन्दिता।
शून्यवादिमुखस्तम्भा शूरपद्मारिजन्मभूः ॥ ९४

शृङ्गाररससम्पूर्णा शृङ्गिणी शृङ्गघोषिणी ।
शृङ्गाभिषिक्तसुशिराः शृङ्गी शृङ्खलदोर्भटा ॥ ९५

शृङ्खलरूपा शेषतल्पभागिनी शेखरोडुपा ।
शोणशैलकृतावासा शोकमोहनिवारिणी ॥ ९६

शोधनी शोभना शोचिष्केशतेजःप्रदायिनी ।
शौरिपूज्या शौर्यवीर्या शौक्तिकेयसुमालिका ॥ ९७

श्रीश्च श्रीधनसम्पन्ना श्रीकण्ठस्वकुटुम्बिनी ।
श्रीमाता श्रीफली श्रीला श्रीवृक्षा श्रीपतीडिता ॥ ९८

श्रीसंज्ञायुतताम्बूला श्रीमती श्रीधराश्रया ।
श्रीबेरबद्धमालाढ्या श्रीफला श्रीशिवांगना ॥ ९९

श्रुतिः श्रुतिपदन्यस्ता श्रुतिसंस्तुतवैभवा ।
श्रूयमाणचतुर्वेदा श्रेणिहंसनटाङ्गिका ॥ १००

श्रेयसी श्रेष्ठिधनदा श्रोणानक्षत्र देवता ।
श्रोणिपूज्या श्रोत्रकान्ता श्रोत्रे श्रीचक्रभूषिता ॥ १०१

श्रौषड्रूपा श्रौतस्मार्तविहिता श्रौतकामिनी ।
शम्बरारातिसंपूज्या शङ्करी शम्भुमोहिनी ॥ १०२

षष्ठी षडाननप्रीता षट्कर्मनिरतस्तुता ।
षट्शास्त्रपारसन्दर्शा षष्ठस्वरविभूषिता ॥ १०३

षट्कालपूजानिरता षण्ठत्वपरिहारिणी ।
षड्रसप्रीतरसना षड्ग्रन्थिविनिभेदिनी ॥ १०४

षडभिज्ञमतध्वंसी षड्जसंवादिवाहिता ।
षट्त्रिंशत्तत्वसंभूता षण्णवत्युपशोभिता ॥ १०५

षण्णवतितत्वनित्या षडङ्गश्रुतिपारदृक् ।
षाण्डदेहार्धभागस्था षाड्गुण्यपरिपूरिता ॥ १०६

षोडशाक्षरमन्त्रार्था षोडशस्वरमातृका।
षोढाविभक्तषोढार्णा षोढान्यासपरायणा ॥ १०७

सकला सच्चिदानन्दा साध्वी सारस्वतप्रदा।
सायुज्यपदवीदात्री तथा सिंहासनेश्वरी ॥ १०८

सिनीवाली सिन्धुसीमा सीता सीमन्तिनीसुखा।
सुनन्दा सूक्ष्मदर्शाङ्गी सृणिपाशविधारिणी ॥ १०९

सृष्टिस्थिति संहारतिरोधानानुग्रहात्मिका।
सेव्या सेवकसंरक्षा सैंहिकेयग्रहार्चिता ॥ ११०

सोहंभावैकसुलभा सोमसूर्याग्निमण्डना।
सौःकाररूपा सौभाग्यवर्धिनी संविदाकृतिः ॥ १११

संस्कृता संहिता संघा सहस्रारनटाङ्गना।
हकारद्वयसन्दिग्धमध्यकूटमनुप्रभा ॥ ११२

हयग्रीवमुखाराध्या हरिर्हरपतिव्रता।
हादिविद्या हास्यभस्मीकृतत्रिपुरसुन्दरी ॥ ११३

हाटकश्रीसभानाथा हिङ्कारमन्त्रचिन्मयी।
हिरण्मयपु(प)राकोशा हिमा हीरककङ्कणा ॥ ११४

ह्रीङ्कारत्रयसम्पूर्णा ह्रींकारजपसौख्यदा।
हुताशनमुखाराध्या हुङ्कारहतकिल्बिषा ॥ ११५

हूं पृच्छा(ष्टा)नेकविज्ञप्तिः हृदयाकारताण्डवा।
हृद्ग्रन्थिभेदिका हृत्कमन्त्रवर्णस्वरूपिणी ॥ ११६

हेमसभामध्यगता हेमा हैमवतीश्वरी।
हैयङ्गवीन हृदया होरा हौङ्काररूपिणी ॥ ११७

हंसकान्ता हंसमन्त्रतत्त्वार्थादिमबोधिनी।
हस्तपद्मालिङ्गिताम्रनाथाऽद्भुतशरीरिणी ॥ ११८

अनृतानृतसंवेद्या अपर्णा चार्भकाऽऽत्मजा ।
आदिभूसदनाकार जानुद्वयविराजिता ॥ ११९

आत्मविद्या चेक्षुचापविधात्रीन्दुकलाधरा ।
इन्द्राक्षीष्टार्थदा चेन्द्रा चेरंमदसमप्रभा ॥ १२०

ईकारचतुरोपेता चेशताण्डवसाक्षिणी ।
उमोग्रभैरवाकारा ऊर्ध्वरेतोव्रताङ्गना ॥ १२१

ऋषिस्तुता ऋतुमती ऋजुमार्गप्रदर्शिनी ।
ॠजुवादनसन्तुष्टा लृलॄवर्णमनुस्वना ॥ १२२

एधमानप्रभा चैला चैकान्ता चैकपाटला ।
एत्यक्षरद्वितीयाङ्क कादिविद्यास्वरूपिणी ॥ १२३

ऐन्द्रा चैश्वर्यदा चौजा ओङ्कारार्थप्रदर्शिनी ।
औषधायित साहस्रनाममन्त्रकदम्बका ॥ १२४

अम्बा चाम्भोजनिलया चांशभूतान्यदेवता ।
अर्हणाऽऽहवनीयाग्निमध्यगाऽहमितीरिता ॥ १२५

कल्याणी कत्रयाकारा काञ्चीपुरनिवासिनी ।
कात्यायनी कामकला कालमेघाभमूर्धजा ॥ १२६

कान्ता काम्या कामजाता कामाक्षी किङ्किणीयुता ।
कीनाशनायिका कुब्जकन्यका कुङ्कुमाकृतिः ॥ १२७

कुल्लुकासेतुसंयुक्ता कुरङ्गनयना कुला ।
कूलकंषकृपासिन्धुः कूर्मपीठोपरिस्थिता ॥ १२८

कृशाङ्गी कृत्तिवसना क्लीङ्कारी क्लींमनूदिता ।
केसरा केलिकासारा केतकीपुष्पभासुरा ॥ १२९

कैलासवासा कैवल्यपदसंचारयोगिनी ।
कोशाम्बा कोपरहिता कोमला कौस्तुभान्विता ॥ १३०

कौशिकी कंसदृष्टाङ्गी कञ्चुकी कर्मसाक्षिणी ।
क्षमा क्षान्तिः क्षितीशार्च्या क्षीराब्धिकृतवासिनी ॥ १३१

क्षुरिकास्त्रा क्षेत्रसंस्था क्षौमाम्बरसुशुभ्रगा ।
खवासा खण्डिका खाङ्ककोटिकोटिसमप्रभा ॥ १३२

खिलर्क्सूक्तजपासक्ता खेटग्रहार्चितान्तरा ।
खण्डिता खण्डपरशुसमाश्लिष्टकलेवरा ॥ १३३

गव्य(वय) शृङ्गाभिषिक्ताङ्गी गवाक्षी गव्यमज्जना ।
गणाधिपप्रसूर्गम्या गायत्री गानमालिका ॥ १३४

गार्हपत्याग्निसंपूज्या गिरीशा गिरिजा च गीः ।
गीर्वाणीवीजनानन्दा गीतिशास्त्रानुबोधिनी ॥ १३५

गुग्गुलो(लू)पेतधूपाढ्या गुडान्नप्रीतमानसा ।
गूढकोशान्तराराध्या गूढशब्दविनोदिनी ॥ १३६

गृहस्थाश्रमसंभाव्या गृहश्रेणीकृतोत्सवा ।
गृ ग्लृ शब्दसुविज्ञात्री गेयगानविगायिनी ॥ १३७

गैरिकाभरणप्रीता गोमाता गोपवन्दिता ।
गौरी गौरवत्रैपुण्ड्रा गङ्गा गन्धर्ववन्दिता ॥ १३८

गहना गह्वराकारदहरान्तःस्थिता घटा ।
घटिका घनसारादिनीराजनसमप्रभा ॥ १३९

घारिपूज्या घुसृणाभा घूर्णिताशेषसैनिका ।
घृघॄघ्लृ स्वरसंपन्ना घोरसंसारनाशिनी ॥ १४०

घोषा घौषात्तखड्गास्त्रा घण्टामण्डलमण्डिता ।
ङकारा चतुरा चक्री चामुण्डा चारुवीक्षणा ॥ १४१

चिन्तामणिमनुध्येया चित्रा चित्रार्चिता चितिः ।
चिदानन्दा चित्रिणी चिच्चिन्त्या चिदम्बरेश्वरी ॥ १४२

चीनपट्टांशुकालेपकटिदेशसमन्विता।
चुलुकीकृतवाराशिमुनिसेवितपादुका॥ १४३

चुम्बितस्कन्दविघ्नेशपरमेशप्रियंवदा।
चूलिका चूर्णिका चूर्णकुन्तला चेटिकावृता। १४४

चैत्री चैत्ररथारूढा चोलभूपालवन्दिता।
चोरितानेकहृत्पद्मा चौक्षा चन्द्रकलाधरा॥ १४५

चर्मकृष्णमृगाधिष्ठा छत्रचामरसेविता।
छान्दोग्योपनिषद्गीता छादिताण्डस्वशाम्बरी॥ १४६

छान्दसानां स्वयंव्यक्ता छायामार्ताण्डसेविता।
छायापुत्रसमाराध्या छिन्नमस्तावरप्रदा॥ १४७

जयदा जगतीकन्दा जटाधरधृता जया।
जाह्नवी जातवेदाख्या जापकेष्टहितप्रदा॥ १४८

जालन्धरासनासीना जिगीषा जितसर्वभूः।
जिष्णुर्जिह्वाग्रनिलया जीवनी जीवकेष्टदा॥ १४९

जुगुप्साढ्या जूतिर्जू(जू)र्णा जृम्भकासुरसूदिनी।
जैत्री जैवातृकोत्तंसा जोर्टिं(षं)गा जोषदायिनी॥ १५०

झञ्झानिलमहावेगा झषा झर्झरघोषिणी।
झिण्टीसुमपरप्रेम्णा(प्रीता) झिल्लिकाकेलिलालिता॥ १५१

टङ्कहस्ता टङ्कितज्या टिट्टरीवाद्यसुप्रिया।
टिट्टिभासनहृत्संस्था ठवर्गचतुरानना॥ १५२

डमड्डमरुवाद्योर्ध्वा णकाराक्षररूपिणी।
तत्त्वज्ञा तरुणी सेव्या तप्तजाम्बूनदप्रभा॥ १५३

तत्त्वपुस्तोल्लसत्पाणिः तपनोडुपलोचना।
तार्तीयभूपुरात्मस्वपादुका तापसेडिता॥ १५४

तिलकायितसर्वेशनिटिलेक्षणशोभना।
तिथिस्तिल्ववनान्तःस्था तीक्ष्णा तीर्थान्तलिङ्गयुक्॥ १५५

तुलसी तुरगारूढा तूलिनी तूर्यवादिनी।
तृप्ता तृणीकृतारातिसेनासङ्गमहाभटा॥ १५६

तेजिनीवनमायूरी तैलाद्यैरभिषेचिता।
तोरणाङ्कितनक्षत्रा तोटकीवृत्तसन्नुता॥ १५७

तौणीरपुष्पविशिखा तौर्यत्रिकसमन्विता।
तन्त्रिणी तर्कशास्त्रज्ञा तर्कवार्ताविदूरगा॥ १५८

तर्जन्यंगुष्ठसंलग्न मुद्राञ्चितकराब्जिका।
थकारिणी थां थीं थों थैं कृतलास्यसमर्थका॥ १५९

दशाश्वरथसंरूढा दक्षिणामूर्तिसंयुगा।
दशबाहुप्रिया दह्रा दशाशाशासनेडिता॥ १६०

दारका दारुकारण्यवासिनी दिग्विलासिनी।
दीक्षिता दीक्षिताराध्या दीनसन्तापनाशिनी॥ १६१

दीपाग्रमङ्गला दीप्ता दीव्यद्ब्रह्माण्डमेखला।
दुरत्यया दुराराध्या दुर्गा दुःखनिवारिणी॥ १६२

दूर्वासतापसाराध्या दूती दूर्वाप्रियप्रसूः।
दृष्टान्तरहिता देवमाता दैत्यविभञ्जिनी॥ १६३

दैविकागारयन्त्रस्था दोर्द्वन्द्वातीतमानसा।
दौर्भाग्यनाशिनी दौती दौवारिकनिधिद्वयी॥ १६४

दण्डिनीमन्त्रिणीमुख्या दहराकाशमध्यगा।
दर्भारण्यकृतावासा दह्रविद्याविलासिनी॥ १६५

धन्वन्तरीड्या धनदा धारासाहस्रसेचना।
धेनुमुद्रा धेनुपूज्या धैर्या धौम्यनुतिप्रिया॥ १६६

नमिता नगरावासा नटी नलिनपादुका ।
नकुली नाभिनालाग्रा नाभावष्टदलाब्जिनी ॥ १६७

नारिकेलामृतप्रीता नारीसंमोहनाकृतिः ।
निगमाश्वरथारूढा नीललोहितनायिका ॥ १६८

नीलोत्पलप्रिया नीला नीलाम्बा नीपवाटिका ।
नुतकल्याणवरदा नूतना नृपपूजिता ॥ १६९

नृहरिस्तुतहृत्पूर्णा नृत्तेशी नृत्तसाक्षिणी ।
नैगमज्ञानसंसेव्या नैगमज्ञानदुर्लभा ॥ १७०

नौकारूढेश वामोरुवीक्षितस्थिरसुन्दरी ।
नन्दिविद्या नन्दिकेशविनुता नन्दनानना ॥ १७१

नन्दिनी नन्दजा नम्या नन्दिताशेषभूपुरा ।
नर्मदा परमाद्वैतभाविता परिपन्थिनी ॥ १७२

परा परीतदिव्यौघा परशंभुपुरन्ध्रिका ।
पथ्या परब्रह्मपत्नी पतञ्जलिसुपूजिता ॥ १७३

पद्माक्षी पद्मिनी पद्मा परमा पद्मगन्धिनी ।
पयस्विनी परेशाना पद्मनाभसहोदरी ॥ १७४

परार्धा परमैश्वर्यकारणा परमेश्वरी ।
पातञ्जलाख्य कल्पोक्तशिवावरणसंयुता ॥ १७५

पाशकोदण्डसुमभृत् पारिपार्श्वकसंनुता ।
पिञ्छा(ञ्जा)विलेपसुमुखा पितृतुल्या पिनाकिनी ॥ १७६

पीतचन्दनसौगन्धा पीताम्बर सहोद्भवा ।
पुण्डरीकपुरीमध्यवर्तिनी पुष्टिवर्धिनी ॥ १७७

पूरयन्ती पूर्यमाणा पूर्णाभा पूर्णिमान्तरा ।
पृच्छामात्रातिशुभदा पृथ्वीमण्डलशासिनी ॥ १७८

पूतना पेशला पेरुमण्डला पैत्ररक्षकी ।
पौषी पौण्ड्रेक्षुकोदण्डा पञ्चपञ्चाक्षरी मनुः ।। १७९

पञ्चमीतिथिसंभाव्या पञ्चकोशान्तरस्थिता ।
फणाधिपसमाराध्या फणामणिविभूषिता ।। १८०

बकपुष्पकृतोत्तंसा बगला बलिनी बला ।
बालार्कमण्डलाभासा बाला बालविनोदिनी ।। १८१

बिन्दुचक्रशिवाङ्कस्था बिल्वभूषितमूर्धजा ।
बीजापूरफलासक्ता बीभत्सावहदृक्त्रयी ।। १८२

बुभुक्षावर्जिता बुद्धिसाक्षिणी बुधवर्षका ।
बृहती बृहदारण्यनुता बृहस्पतीडिता ।। १८३

बेराख्या बैन्दवाकार वैरिञ्चसुषिरान्तरा ।
बोद्ध्री बोधायना बौद्धदर्शना बन्धमोचनी ।। १८४

भट्टारिका भद्रकाली भारतीभा भिषग्वरा ।
भित्तिका भिन्नदैत्याङ्गा भिक्षाटनसहानुगा ।। १८५

भीषणा भीतिरहिता भुवनत्रयशंकरा ।
भूतघ्नी भूतदमनी भूतेशालिङ्गनोत्सुका ।। १८६

भूतिभूषितसर्वाङ्गी भृग्वङ्गिरमुनिप्रिया ।
भृङ्गिनाट्यविनोदज्ञा भैरवप्रीतिदायिनी ।। १८७

भोगिनी भोगशमनी भोगमोक्षप्रदायिनी ।
भौमपूज्या भण्डहन्त्री भग्नदक्षक्रतुप्रिया ।। १८८

मकारपञ्चमी मह्या मदनी मकरध्वजा ।
मत्स्याक्षी मधुरावासा मन्वश्रहृदयाश्रया ।। १८९

मार्ताण्ड विनुता माणिभद्रेड्या माधवार्चिता ।
माया मारप्रिया मारसखीड्या माधुरीमनाः ।। १९०

माहेश्वरी माहिषघ्नी मिथ्यावादप्रणाशिनी ।
मीनाक्षी मीनसंसृष्टा मीमांसाशास्त्रलोचना ॥ १९१

मुग्धाङ्गी मुनिबृन्दार्च्या मुक्तिदा मूलविग्रहा ।
मूषिकारूढजननी मूढभक्तिमदर्चिता ॥ १९२

मृत्युञ्जयसती मृग्या मृगालेपनलोलुपा ।
मेधाप्रदा मेखलाढ्या मेघवाहनसेविता ॥ १९३

मेनात्मजा मैथिलीशकृतार्चन पदाम्बुजा ।
मैत्री मैनाकभगिनी मोहजालप्रणाशिनी ॥ १९४

मोदप्रदा मौलिगेन्दुकलाधरकिरीटभाक् ।
मौहूर्तलग्नवरदा मञ्जीरा मञ्जुभाषिणी ॥ १९५

मर्मज्ञात्री महादेवी यमुना यज्ञसंभवा ।
यातनारहिता याना यामिनीपूजकेष्टदा ॥ १९६

युक्ता यूपा यूथिकार्च्या योगा योगेशयोगदा ।
(यक्षराजसखान्तरा)
रथिनी रजनी रत्नगर्भा रक्षितभूरुहा ॥ १९७

रमा रसक्रिया रश्मिमालासन्नुतवैभवा ।
रक्ता रसा रती रथ्या रणन्मञ्जीरनूपुरा ॥ १९८

रक्षा रविध्वजाराध्या रमणी रविलोचना ।
रसज्ञा रसिका रक्तदन्ता रक्षणलम्पटा ॥ १९९

रक्षोघ्नजपसन्तुष्टा रक्ताङ्गापाङ्गलोचना ।
रत्नद्वीपवनान्तःस्था रजनीशकलाधरा ॥ २००

रत्नप्रकारनिलया रणमध्या रमार्थदा ।
रजनीमुखसंपूज्या रत्नसानुस्थिता रयिः ॥ २०१

—*—

९

# योगनायिकासहस्रनामावलिः

(राजराजेश्वरीसहस्रनामावलिरित्यपि)

ओं राजराजेश्वर्यै नमः । राजरक्षक्यै । राजनर्तक्यै । राजविद्यायै । राज पूज्यायै । राजकोश समृद्धिदायै । राजहंसतिरस्कारिगमनायै । राजलोचनायै । राज्ञां गुरुवराराध्यायै । राजयुक्तनटाङ्गनायै । राजगर्भायै । राजकन्दकदलीसक्तमानसायै । राज्ञां कविकुलाख्यातायै । राजयोगनिवारिण्यै ।राजौषधि सुसम्पन्नायै । राजनीति विशारदायै । राज्ञां सभालङ्कृताङ्ग्यै । राजलक्षण संयुतायै । राजद्रलायै । राजवल्लयै नमः । २०

ओं राजत्तिल्ववनाधिपायै नमः । राजसद्गुणनिर्दिष्टायै । राजमार्गरथोत्सवायै । राजचक्राङ्कितकरायै । राजांशायै । राजशासनायै । राजत्कृपायै । राजलक्ष्म्यै । राजत्कञ्चुक धारिण्यै । राजाहङ्कार शमनायै । राजकार्यधुरन्धरायै । राजाज्ञायै । राजमातङ्ग्यै । राजयन्त्रकृतार्चनायै । राजक्रीडायै । राजवेश्मप्रवेशितनिजाश्रितायै । राजमन्दिरवात्सल्यायै । राजस्त्रियै । राजजागरायै । राजशापविनिर्मुक्तायै नमः । ४०

ओं राजश्रियै नमः । राजमन्त्रिण्यै । राजपुत्र्यै । राजमैत्र्यै । राजान्तः पुरवासिन्यै । राजपापविनिर्मुक्तायै । राजर्षिपरि-सेवितायै । राजोत्तम मृगारूढायै । राज्ञस्तेजः प्रदायिन्यै । राजार्चित पदाम्भोजायै । राजालङ्कार वेष्टितायै । राजसूय समाराध्यायै । राजसाहस्रसेवितायै । राजसन्तापशमन्यै । राजशब्दपरायणायै । राजार्हमणिभूषाढ्यायै । राजच्छृंगार नायिकायै ।

राजद्रुमूलसंराजद्विघ्नेशवरदायिन्यै । राजपर्वतकौमार्यै । राजशौर्य प्रदायिन्यै नमः । ६०

ओं राजाभ्यन्तः समाराध्यायै नमः । राजमौलि मनस्विन्यै । राजमात्रे । राजमाष प्रियार्चितपदाम्बुजायै । राजारिमर्दिन्यै । राज्यै । राजत्कल्हार हस्तकायै । रामचन्द्रसमाराध्यायै । रामायै । राजीवलोचनायै । रावणेश समाराध्यायै । राकाचन्द्र समाननायै । रात्रिसूक्तजप प्रीतायै । रागद्वेष विवर्जितायै । रिङ्गन्नूपुरपादाब्जायै । रिव्यादिपरिसेवितायै । रिपुसंघकुलध्वान्तायै । रिगमस्वर भूषितायै । रुक्मिणीश सहोद्भूतायै । रुद्राण्यै नमः । ८०

ओं रुरुभैरव्यै नमः । रुग्घन्त्र्यै । रुद्रकोपाग्निशमन्यै । रुद्रसंस्तुतायै । रुषानिवारिण्यै । रूपलावण्याम्बुधि चन्द्रिकायै । रूप्यासनप्रियायै । रूढायै । रूप्यचन्द्रशिखामणये । रेफवर्ण-गळायै । रेवानदीतीर विहारिण्यै । रेणुकायै । रेणुकाराध्यायै । रेखोर्ध्वकृतचक्रिण्यै । रैणुकेयाख्यकल्पोक्त यजनप्रीतमानसायै । रोमलम्बितविध्यण्डायै । रोमन्थमुनिसेवितायै । रोमावलि सुलावण्य मध्यभागसुशोभितायै । रोचनागरुकस्तूरी चन्दनश्रीविलेपितायै । रोहिणीश कृतोत्तंसायै नमः । १००

ओं रोहिणीपितृवन्दितायै नम । रोहिताश्व सुसंभूतायै । रौहिणेयानुजार्चितायै । रौप्यसिंहासनारूढचाक्षुष्मन्मन्त्र विग्रहायै । रौद्र मन्त्राभिषिक्ताङ्ग्यै । रौद्रमध्य समीडितायै । रौरवान्तकर्यै । रौच्यपत्रपुष्पकृतार्चनायै । रङ्गलास्य कृतालोलायै । रङ्गवल्याद्यलङ्कृतायै । रञ्जक श्री सभामध्यगायकान्तरवासिन्यै । ललितायै । लड्डुकप्रीतमानसस्कन्दजन्मभुवे । लकारत्रयुक्त श्री विद्यामन्त्रकदम्बकायै । लक्षणायै । लक्षणाराध्यायै । लक्षबिल्वार्चन

प्रियायै। लज्जाशीलायै। लक्षणज्ञायै। लकुचान्नकृतादरायै नमः। १२०

ओं ललाटनयनार्धाङ्ग्यै नमः। लवङ्गत्वक्सुगन्धवाचे। लाजहोमप्रियायै। लाक्षागृहे कौन्तेय सेवितायै। लाङ्गल्यै। लालनायै। लालायै। लालिकायै। लिङ्गपीठगायै। लिपिव्यष्टि-समष्टिज्ञायै। लिपिन्यस्तत्रिणेत्रभृते। लुङ्गाफलसमासक्तायै। लुलायासुरघातुक्यै। लूतिकापतिसंपूज्यायै। लूताविस्फोट-नाशिन्यै। लृलॄवर्णस्वरूपाढ्यायै। लेखिन्यै। लेखकप्रियायै। लेह्यचोष्यपेय-खाद्यभक्ष्यभोज्यादिमप्रियायै। लेपितश्रीचन्दनाङ्ग्यै नमः। १४०

ओं लैङ्गमार्गप्रपूजितायै नमः। लोलम्बिरत्न हाराङ्ग्यै। लोलाक्ष्यै। लोकवन्दितायै। लोपामुद्रार्चितपदायै। लोपामुद्रापतीडितायै। लोभकामक्रोधमोहमदमात्सर्य वारितायै। लोहजप्रतिमायन्त्रवासिन्यै। लोकरञ्जिन्यै। लोकवेद्यायै। लोलडोलास्थित शम्भुविहारिण्यै। लोलजिह्वापरीताङ्ग्यै। लोकसंहारकारिण्यै। लौकिकीज्या विदूरस्थायै। लङ्केशानसुपूजितायै। लम्पटायै। लम्बिमालाभिनन्दितायै। लवलीधरायै। वक्रतुण्डप्रियायै। वज्रायै नमः। १६०

ओं वधूट्यै नमः। वनवासिन्यै। वध्वै। वचनसन्तुष्टायै। वत्सलायै। वटुभैरव्यै। वटमूलनिवासार्धायै। वरवीराङ्गनावृतायै। वनितायै। वर्धन्यै। वर्ष्यायै। वरालीरागलोलुपायै। वलयीकृत माहेशकरसौवर्णकन्धरायै। वराङ्ग्यै। वसुधायै। वप्रकेलिन्यै। वणिजायै। वरायै। वपुरायित श्री चक्रायै। वरदायै नमः। १८०

ओं वरवर्णिन्यै नमः। वराह वदनाराध्यायै। वर्णपञ्चदशात्मिकायै। वसिष्ठाच्यायै। वल्कलान्तर्हितरम्यस्त-

नद्यै । वशिन्यै । वल्लक्यै । वर्णायै । वर्षाकाल प्रपूजितायै । वल्लयै । वसुदलप्रान्तवृत्तकव्याश्रितादरायै । वर्गायै । वरवृषारूढायै । वषण्मन्त्रसुसंज्ञकायै । वलयाकार वैडूर्यवरकङ्कणभूषणायै । वज्राश्रितशिरोभूषायै । वज्रमांगल्यभूषितायै । वाग्वादिन्यै । वामकेश्यै । वाचस्पतिवरप्रदायै नमः ।। २००

ओं वादिन्यै नमः । वागधिष्ठात्र्यै । वारुण्यै । वायुसेवितायै । वात्स्यायनसुतन्त्रोक्तायै । वाण्यै । वाक्यपदार्थजायै । वाद्यघोषप्रियायै । वाद्यवृन्दारम्भनटोक्सुकायै । वापीकूपसमी-पस्थायै । वार्तात्यै । वामलोचनायै । वास्तोष्पतीड्यायै । वामाङ्घ्रिधृतनूपुरशोभितायै । वामायै । वाराणसी क्षेत्रायै । वाडबेय वरप्रदायै । वामाङ्गायै । वाञ्छित फलदात्र्यै । वाचाल खण्डितायै नमः । २२०

ओं वाच्यवाचक वाक्यार्थायै नमः । वामनायै । वाजिवाहनायै । वासुकीकण्ठभूषाढ्य वामदेवप्रियाङ्गनायै । विजयायै । विमलायै । विश्वायै । विग्रहायै । विधृताङ्कुशायै । विनोदवनवास्तव्यायै । विभक्ताण्डायै । विधीडितायै । विक्रमायै । विषजन्तुघ्न्यै । विश्वामित्रवरप्रदायै । विश्वम्भरायै । विष्णुशक्त्यै । विजिज्ञासायै । विचक्षणायै । विटङ्कत्यागराजेन्द्रपीठ संस्थायै नमः । २४०

ओं विधीडितायै नमः । विदितायै । विश्वजनन्यै । विस्तारित चमूबलायै । विद्यायै । विनयसंपन्नायै । विद्याद्वादशनायिकायै । विभाकरात्यर्बुदाभायै । विधात्र्यै । विन्ध्यवासिन्यै । विरूपाक्ष-सख्यै । विश्वनाथवामोरु संस्थितायै । विशल्यायै । विशिखायै । विघ्नायै । विप्ररूपायै । विहारिण्यै । विनायकगुहक्रीडायै । विशालाक्ष्यै । विरागिण्यै नमः । २६०

ओं विपुलायै नमः । विश्वरूपाख्यायै । विषघ्न्यै । विश्वभामिन्यै । विशोकायै । विरजायै । विप्रायै । विद्युल्लेखेव-भासुरायै । विपरीतरतिप्रीतपत्न्ये । विजयसंयुतायै । विरिञ्चिविष्णु-वनिताधृत चामरसेवितायै । वीरपानप्रियायै । वीरायै । वीणापुस्तक-धारिण्यै । वीरमार्ताण्डवरदायै । वीरबाहुप्रियङ्कर्यै । वीराष्टाष्टक परीतायै । वीरशूरजनप्रियायै । वीजितश्रीचामरधृत् लक्ष्मीवाणीनि-षेवितायै । वीरलक्ष्म्यै नमः । २८०

ओं वीतिहोत्रनिटिलायै नमः । वीरभद्रकायै । वृक्षराजसुमूलस्थायै । वृषभध्वजलाञ्छनायै। वृषाकपाय्यै । वृत्तज्ञायै । वृद्धायै । वृत्तान्तनायिकायै । वृवूवर्णाङ्गविन्यासायै । वेणीकृतशिरोरुहायै । वेदिकायै । वेदविनुतायै । वेतण्डकृतवाह-नायै । वेदमात्रे । वेगहन्त्र्यै । वेतसीगृहमध्यगायै । वेतालनटन-प्रीतायै । वेङ्कटाद्रिनिवासिन्यै । वेणुवीणामृदङ्गादिवाद्यघोष-विशारदायै । वेषिण्यै नमः । ३००

ओं वैनतेयानुकम्पिन्यै नमः । वैरिनाशिन्यै । वैनायक्यै । वैद्यमात्रे । वैष्णव्यै । वैणिकस्वनायै । वैजयन्तीष्ट-वरदायै ।वैकुण्ठवरसोदर्यै । वैशाखपूजितायै । वैश्यायै । वैदेह्यै । वैद्यशासिन्यै ।वैकुण्ठायै । वैजयन्तीड्यायै । वैयाघ्रमुनिसेवितायै । वैहायसी नटीरासायै । वौषट्श्रौषट्स्वरूपिण्यै । वन्दितायै । वङ्गदेशस्थायै । वंशगानविनोदिन्यै नमः । ३२०

ओं वम्र्यादिरक्षक्यै नमः । वंक्र्यै । वन्दारुजन वत्सलायै । वन्दिताखिललोकश्रियै । वक्षःस्थल मनोहरायै । शर्वाण्यै । शरभाकारायै । शस्त्रजन्मानुरागिण्यै । शक्वर्यै । शमिताघौघायै । शक्तायै । शतकरार्चितायै । शच्यै । शरावत्यै । शक्रसेव्यायै । शयितसुन्दर्यै । शरभृच्छबर्यै । शक्तिमोहिन्यै । शणपुष्पिकायै । शकुन्ताक्ष्यै नमः । ३४०

ओं शकाराख्यायै नमः । शतसाहस्रपूजितायै । शब्दमात्रे । शतावृत्तिपूजितायै । शत्रुनाशिन्यै । शतानन्दायै । शतमुख्यै । शमीबिल्वप्रियायै । शश्यै । शनकैः पदविन्यस्तप्रदक्षिणनतिप्रियायै । शातकुम्भाभिषिक्ताङ्ग्यै । शातकुम्भस्तनद्वय्यै । शातातपमुनीन्द्रेड्यायै । शालवृक्षकृतालयायै । शासकायै । शाकरप्रीतायै । शालायै । शाकम्भरीनुतायै । शार्ङ्गपाणिबलायै । शास्तृजनन्यै नमः । ३६०

ओं शारदाम्बिकायै नमः । शापमुक्तमनुप्रीतायै । शाबरीवेषधारिण्यै । शाम्भव्यै । शाश्वतैश्वर्यायै । शासनाधीनवल्लभायै । शास्त्रतत्वार्थनिलयायै । शालिवाहनवन्दितायै । शार्दूलचर्मवास्तव्यायै । शान्तिपौष्टिकनायिकायै । शान्तिदायै । शालिदायै । शापमोचिन्यै । शाडवप्रियायै । शारिकाशुकहस्तोर्ध्वायै । शाखानेकान्तर श्रुतायै । शाकलादिम ऋक्शाखामन्त्र कीर्तित वैभवायै । शिवकामेश्वराङ्कस्थायै । शिखण्डिमहिष्यै । शिवायै नमः । ३८०

ओं शिवारम्भायै नमः । शिवाद्वैतायै । शिवसायुज्य दायिन्यै । शिवसङ्कल्पमन्त्रेड्यायै । शिवेनसहमोदितायै । शिरीषपुष्पसङ्काशायै । शितिकण्ठकुटुम्बिन्यै । शिवमार्गविदांश्रेष्ठायै । शिवकामेशसुन्दर्यै । शिवनाट्यपरीताङ्ग्यै । शिवज्ञानप्रदायिन्यै । शिवनृत्तसदालोकमानसायै । शिवसाक्षिण्यै । शिवकामाख्यकोष्ठस्थायै । शिशुदायै । शिशुरक्षक्यै । शिवागमैकरसिकायै । शिक्षितासुरकन्यकायै । शिल्पिशालाकृतावासायै । शिखिवाहायै नमः । ४००

ओं शिलामय्यै नमः । शिंशपावृक्षफलवद्भिन्नानेकारि मस्तकायै । शिरःस्थितेन्दु चक्राङ्कायै । शितिकुम्भसुमप्रियायै ।

शिंजन्नूपुरभूषात्तकृतमन्मथभेरिकायै। शिवेष्टायै। शिबिकारूढायै । शिवारावाभयङ्कर्यै । शिरोर्ध्वनिलयासीनायै । शिवशक्त्यैक्य रूपिण्यै । शिवासनसमाविष्टायै । शिवार्च्यायै । शिववल्लभायै । शिवदर्शनसन्तुष्टायै । शिवमन्त्रजपप्रियायै । शिवदूत्यै । शिवानन्यायै । शिवासनसमन्वितायै । शिष्याचरितशैलेशायै । शिवगान विगायिन्यै नमः । ४२०

ओं शिवशैलकृतावासायै नमः । शिवाम्बायै । शिवकोमलायै । शिवगङ्गासरस्तीरप्रत्यङ्मन्दिरवासिन्यै । शिवाक्षरारम्भपञ्चदशाक्षरमनुप्रियायै । शिखादेव्यै । शिवाभिन्नायै । शिवतत्वविमर्शिन्यै । शिवालोकनसन्तुष्टायै । शिवार्धाङ्ग सुकोमलायै । शिवरात्रिदिनाराध्यायै । शिवस्यहृदयङ्गमायै । शिवरूपायै । शिवपरायै । शिववाक्यार्थबोधिन्यै । शिवार्चनरतायै । शिल्पलक्षणायै । शिल्पिसेवितायै । शिवागमरहस्योक्तायै । शिवोहंभावितान्तरायै नमः । ४४०

ओं शिम्बीजश्रवणानन्दायै नमः । शिमन्तर्नाममन्त्रराजे । शीकारायै । शीतलायै । शीलायै । शीतपङ्कजमध्यगायै । शीतभीरवे । शीघ्रगन्त्र्यै । शीर्षकायै । शीकरप्रभायै । शीतचामीकराभासायै । शीर्षोद्धूपित कुन्तलायै । शीतगङ्गाजलस्नातायै । शुका(क्रा)राधित चक्रगायै । शुक्रपूज्यायै । शुच्यै । शुभ्रायै । शुक्तिमुक्तायै । शुभप्रदायै । शुच्यन्तरङ्गायै नमः । ४६०

ओं शुद्धाङ्ग्यै नमः । शुद्धायै । शुक्यै । शुचिव्रतायै । शुद्धान्तायै । शूलिन्यै । शूर्पकर्णाम्बायै । शूरवन्दितायै । शून्यवादिमुखस्तम्भायै । शूरपद्मारिजन्मभुवे । शृङ्गाररससम्पूर्णायै । शृङ्गिण्यै । शृङ्गघोषिण्यै । शृङ्गाभिषिक्तसुशिरसे ।

शृङ्ग्यै । शृङ्खलदोर्भटायै । शूश्लृरूपायै । शेषतल्पभगिन्यै । शेखरोडुपायै । शोणशैलकृतावासायै नमः । ४८०

ओं शोकमोहनिवारिण्यै नमः । शोधन्यै । शोभनायै । शोचिष्केशतेजः प्रदायिन्यै । शौरिपूज्यायै । शौर्यवीर्यायै । शौक्तिकेयसुमालिकायै । श्रियै । श्रीधनसम्पन्नायै । श्रीकण्ठस्व-कुटुम्बिन्यै । श्रीमात्रे । श्रीफल्यै । श्रीलायै । श्रीवृक्षायै । श्रीपती-डितायै । श्रीसंज्ञायुतताम्बूलायै । श्रीमत्यै । श्रीधराश्रयायै । श्रीबेरबद्धमालाढ्यायै । श्रीफलायै नमः । ५००

श्रीशिवाङ्गनायै नमः । श्रुत्यै । श्रुतिपदन्यस्तायै । श्रुतिसंस्तुतवैभवायै । श्रूयमाण चतुर्वेदायै । श्रेणिहंसनटाञ्चिकायै । श्रेयस्यै । श्रेष्ठिधनदायै । श्रोणानक्षत्र देवतायै । श्रोणिपूज्यायै । श्रोत्रकान्तायै । श्रोत्रे श्री चक्रभूषितायै । श्रौषड्रूपायै । श्रौतस्मार्तविहितायै । श्रौतकामिन्यै । शम्बराराति सम्पूज्यायै । शङ्कर्यै । शम्भुमोहिन्यै । षष्ठ्यै । षडाननप्रीतायै नमः । ५२०

ओं षट्कर्मनिरतस्तुतायै नमः । षट्छास्त्रपारसन्दर्शायै । षष्ठस्वरविभूषितायै । षट्कालपूजानिरतायै । षण्ठत्वपरिहारिण्यै । षड्रसप्रीतरसनायै । षड्ग्रन्थिविनिभेदिन्यै । षडभिज्ञमतध्वंस्यै । षड्जसंवादिवाहितायै । षट्त्रिंशत्तत्व संभूतायै । षण्णवत्युप-शोभितायै । षण्णवतितत्व नित्यायै । षडङ्गश्रुतिपारदृशे । षाण्डदेहार्धभागस्थायै । षाड्गुण्यपरिपूरितायै । षोडशाक्षर-मन्त्रार्थायै । षोडशस्वर मातृकायै । षोढाविभक्त षोढार्णायै । षोढान्यासपरायणायै । सकलायै नमः । ५४०

ओं सच्चिदानन्दायै नमः । साध्व्यै । सारस्वतप्रदायै । सायुज्यपदवीदात्र्यै । सिंहासनेश्वर्यै । सिनीवाल्यै । सिन्धुसीमायै ।

सीतायै। सीमन्तिनीसुखायै। सुनन्दायै। सूक्ष्मदर्शाङ्ग्यै। सृणिपाश विधारिण्यै। सृष्टिस्थिति संहार तिरोधानानुग्रहात्मिकायै। सेव्यायै । सेवकसंरक्षायै । सैंहिकेय ग्रहार्चितायै । सोहंभावैक सुलभायै । सोमसूर्याग्नि मण्डनायै। सौः काररूपायै। सौभाग्यवर्द्धिन्यै नमः। ५६०

ओं संविदाकृतये नमः । संस्कृतायै । संहितायै । संघायै । सहस्रारनटाङ्गनायै । हकारद्वयसन्दिग्धमध्यकूटमनुप्रभायै । हयग्रीवमुखाराध्यायै । हर्यै । हरपतिव्रतायै । हादिविद्यायै । हास्यभस्मीकृतत्रिपुरसुन्दर्यै। हाटक श्री सभानाथायै। हिङ्कारमन्त्र चिन्मय्यै । हिरण्मयपराकोशायै । हिमायै । हीरक कङ्कणायै । ह्रींङ्कारत्रय संपूर्णायै । ह्रींकारजप सौख्यदायै । हुताशनमुखा-राध्यायै । हुङ्कारहत किल्बिषायै। ५८०

हूंपृच्छानेक विज्ञासये । हृदयाकारताण्डवायै । हृद्ग्रन्थिभेदिकायै । हृहृमन्त्रवर्णस्वरूपिण्यै। हेमसभामध्य-गतायै । हेमायै । हैमवतीश्वर्यै । हैयङ्गवीनहृदयायै । होरायै । हौङ्काररूपिण्यै । हंसकान्तायै । हंसमन्त्रतत्वार्थादिमबोधिन्यै । हस्तपद्मालिङ्गताम्रनाथायै । अद्भुतशरीरिण्यै । अनृतानृत-संवेद्यायै । अपर्णायै । अर्भकायै । आत्मजायै । आदिभूसदनाकारजानुद्वयविराजितायै । आत्मविद्यायै नमः । ६००

ओं इक्षुचापविधात्र्यै नमः । इन्दुकलाधरायै । इन्द्राक्ष्यै । इष्टार्थदायै । इन्द्रायै । इरंमदसमप्रभायै । ईकारचतुरो पेतायै । ईशताण्डवसाक्षिण्यै । उमायै । उग्रभैरवाकारायै । ऊर्ध्वरेतोव्रताङ्गनायै। ऋषिस्तुतायै। ऋतुमत्यै। ऋजुमार्गप्रदर्शिन्यै।

ऋजुवादन सन्तुष्टायै । लृलॄवर्णमनुस्वनायै । एधमानप्रभायै । एलायै । एकान्तायै । एकपाटलायै नमः । ६२०

ओं एत्यक्षर द्वितीयाङ्कादिविद्यास्वरूपिण्यै । ऐन्द्रायै । ऐश्वर्यदायै । ओजसे । ओङ्कारार्थप्रदर्शिन्यै । औषधायित साहस्रनाम मन्त्र कदम्बकायै । अम्बायै । अम्भोजनिलयायै । अंशभूतान्य-देवतायै । अर्हणायै । आहवनीयाग्निमध्यगायै । अहमितीरितायै । कल्याण्यै । कत्रयाकारायै । काञ्चीपुरनिवासिन्यै । कात्यायन्यै । कामकलायै । कालमेघाभमूर्धजायै । कान्तायै । काम्यायै नमः । ६४०

ओं कामजातायै नमः । कामाक्ष्यै । किङ्किणीयुतायै । कीनाश नायिकायै । कुब्जकन्यकायै । कुङ्कुमाकृतये । कुल्लुकासेतुसंयुक्तायै । कुरङ्गनयनायै । कुलायै । कूलङ्कषकृपासिन्धवे । कूर्मपीठोपरि-स्थितायै । कृशाङ्ग्यै । कृत्तिवसनायै । क्लींकार्यै । क्लींमनूदितायै । केसरायै । केलिकासारायै । केतकीपुष्पभासुरायै । कैलासवासायै । कैवल्यपदसञ्चारयोगिन्यै नमः । ६६०

ओं कोशाम्बायै । कोपरहितायै । कोमलायै । कौस्तुभा-न्वितायै । कौशिक्यै । कंसदृष्टाङ्ग्यै । कञ्चुक्यै । कर्मसाक्षिण्यै । क्षमायै । क्षान्त्यै । क्षितीशार्च्यायै । क्षीराब्धिकृतवासिन्यै । क्षुरिकास्त्रायै । क्षेत्रसंस्थायै । क्षौमाम्बरसुशुभ्रगायै । खवासायै । खण्डिकायै । खाङ्ककोटिकोटिसमप्रभायै । खिलर्क्सूक्तजपा-सक्तायै । खेटग्रहार्चितान्तरायै नमः । ६८०

ओं खण्डितायै नमः । खण्डपरशुसमाश्लिष्टकलेबरायै । गवय शृङ्गाभिषिक्ताङ्ग्यै । गवाक्ष्यै । गव्यमज्जनायै । गणाधिपप्रसुवे । गम्यायै । गायत्र्यै । गानमालिकायै । गार्हपत्याग्निसंपूज्यायै ।

गिरीशायै । गिरिजायै । गिरे । गीर्वाणी वीजनानन्दायै । गीति शास्त्रानुबोधिन्यै । गुग्गुलोपेतधूपाढ्यायै । गुडान्नप्रीतमानसायै । गूढकोशान्तराराध्यायै । गूढशब्दविनोदिन्यै । गृहस्थाश्रमसंभाव्यायै नमः । ७००

ओं गृहश्रेणीकृतोत्सवायै नमः । गृग्लृशब्दसुविज्ञात्र्यै । गेयगानविगायिन्यै । गैरिकाभरणप्रीतायै । गोमात्रे । गोपवन्दितायै । गौर्यै । गौरवत्रैपुण्ड्रायै । गङ्गायै । गन्धर्ववन्दितायै । गह्नायै । गह्वराकार दहरान्तः स्थितायै । घटायै । घटिकायै । घन सारादिनीराजनसमप्रभायै । घारिपूज्यायै । घुसृणभायै । घूर्णिताशेषसैनिकायै । घृघॄघ्लृस्वर सम्पन्नायै । घोरसंसारनाशिन्यै नमः । ७२०

ओं घोषायै नमः । घौषाक्तखड्गास्त्रायै । घण्टामण्डलमण्डितायै । ङकारायै । चतुरायै । चक्र्यै । चामुण्डायै । चारुवीक्षणायै । चिन्तामणिमनुध्येयायै । चित्रायै । चित्रार्चितायै । चित्यै । चिदानन्दायै । चित्रिण्यै । चिदे । चिन्त्यायै । चिदम्बरेश्वर्यै । चीनपट्टांशुकालेपकटिदेशसमन्वितायै । चुलुकीकृतवाराशिमुनिसेवितपादुकायै । चुम्बितस्कन्दविघ्नेश परमेशप्रियंवदायै नमः । ७४०

ओं चूलिकायै नमः । चूर्णिकायै । चूर्णकुन्तलायै । चेटिका वृतायै । चैत्र्यै । चैत्ररथारूढायै । चोलभूपाल वन्दितायै । चोरितानेक हृत्पद्मायै । चौक्षायै । चन्द्रकलाधरायै । चर्मकृष्णमृगाधिष्ठायै । छत्रचामर सेवितायै । छान्दोग्योपनिषद्गीतायै । छादिताण्डस्वशाम्बर्यै । छान्दसानां स्वयं व्यक्तायै । छाया मार्ताण्डसेवितायै । छाया पुत्रसमाराध्यायै । छिन्नमस्तावरप्रदायै । जयदायै । जगतीकन्दायै नमः । ७६०

जटाधरधृतायै । जयायै । जाह्नव्यै । जातवेदाख्यायै । जापकेष्टहित प्रदायै । जालन्धरासनासीनायै । जिगीषायै । जितसर्वभुवे । जिष्णवे । जिह्वाग्रनिलयायै । जीवन्यै । जीवकेष्टदायै । जुगुप्साढ्यायै । जूत्यै । जूर्णायै । जृम्भकासुर सूदिन्यै । जैत्र्यै । जैवातृकोत्तंसायै । जोटि(ष)ङ्गायै । जोषदायिन्यै नमः । ७८०

झञ्झानिल महावेगायै नमः । झषायै । झर्झर घोषिण्यै । झिण्टीसुमपरप्रेम्णायै । झिल्लिकाकेलिलालितायै । टङ्कहस्तायै । टङ्कितज्यायै । टिट्टरीवाद्यसुप्रियायै । टिट्टिभासन हृत् संस्थायै । ठवर्गचतुराननायै । डमड्डमरुवाद्यूर्ध्वायै । णकाराक्षररूपिण्यै । तत्वज्ञायै । । तरुणीसेव्यायै । तप्तजाम्बूनदप्रभायै । तत्वपुस्तोल्लसत् पाणये । तपनोडुपलोचनायै । तार्तीयभूपुरात्मस्व पादुकायै । तापसेडितायै । तिलकायितसर्वेशनिटिलेक्षणशोभनायै नमः । ८००

ओं तिथये नमः । तिल्लवनान्तःस्थायै । तीक्ष्णायै । तीर्थान्तलिङ्गयुजे । तुलस्यै । तुरगारूढायै । तूलिन्यै । तूर्यवादिन्यै । तृप्तायै । तृणीकृताराातिसेनासंघमहाभटायै । तेजिनीवनमायूर्यै । तैलाद्यैरभिषेचितायै । तोरणाङ्कित नक्षत्रायै । तोटकीवृत्तसन्नुतायै । तौणीरपुष्पविशिखायै । तौर्यत्रिक समन्वितायै । तन्त्रिण्यै । तर्कशास्त्रज्ञायै । तर्कवार्तानिदूरगायै । तर्जन्यङ्गुष्ठ सल्लग्न मुद्राञ्चितकराब्जिकायै नमः । ८२०

ओं थकारिण्यै नमः । थां थीं थों थैं कृतलास्यसमर्थकायै । दशाश्वरथ संरूढायै । दक्षिणामूर्ति संयुगायै । दशबाहु प्रियायै । दह्रायै । दशाशाशासनेडितायै । दारकायै । दारुकारण्यवासिन्यै । दिग्विलासिन्यै । दीक्षितायै । दीक्षिताराध्यायै । दीनसन्तापनाशिन्यै । दीपाग्रमङ्गलायै । दीप्तायै । दीव्यद्ब्रह्माण्डमेखलायै । दुरत्ययायै । दुराराध्यायै । दुर्गायै । दुःखनिवारिण्यै नमः । ८४०

दूर्वासतापसाराध्यायै नमः । दूत्यै । दूर्वाप्रियप्रसुवे । दृष्टान्तरहितायै । देवमात्रे । दैत्यविभंजिन्यै । दैविकागार यन्त्रस्थायै । दोर्द्वंद्वातीतमानसायै । दौर्भाग्यनाशिन्यै । दौत्यै । दौवारिक निधिद्वय्यै । दण्डिनी मन्त्रिणी मुख्यायै । दहराकाश मध्यगायै । दर्भारण्य कृतावासायै । दह्रविद्याविलासिन्यै । धन्वन्तरीड्यायै । धनदायै । धारासाहस्रसेचनायै । धेनुमुद्रायै । धेनुपूज्यायै नमः । ८६०

ओं धैर्यायै नमः । धौम्यनुति प्रियायै । नमितायै । नगरावासायै । नट्यै । नलिनपादुकायै । नकुल्यै । नाभिनालाग्रायै । नाभावष्टदलाब्जिन्यै । नारिकेलामृतप्रीतायै । नारी संमोहनाकृतये । निगमाश्वरथारूढायै । नीललोहितनायिकायै । नीलोत्पल प्रियायै । नीलायै । नीलाम्बायै । नीपवाटिकायै । नुतकल्याण वरदायै । नूतनायै । नृपपूजितायै नमः । ८८०

ओं नृहरिस्तुतहृत् पूर्णायै । नृत्तेश्यै । नृत्तसाक्षिण्यै । नैगमज्ञानसंसेव्यायै । नैगमज्ञान दुर्लभायै । नौकारूढेश वामोरु वीक्षितस्थिर सुन्दर्यै । नन्दिविद्यायै । नन्दिकेशविनुतायै । नन्दनाननायै । नन्दिन्यै । नन्दजायै । नम्यायै । नन्दिताशेष-भूपुरायै । नर्मदायै । परमाद्वैतभावितायै । परिपन्थिन्यै । परायै । परीतदिव्यौघायै । परशम्भुपुराम्बिकायै । पथ्यायै नमः । ९००

ओं परब्रह्मपत्न्यै नमः । पतञ्जलिसुपूजितायै । पद्माक्ष्यै । पद्मिन्यै । पद्मायै । परमायै । पद्मगन्धिन्यै । पयस्विन्यै । परेशानायै । पद्मनाभ सहोदर्यै । पराधर्यै । परमैश्वर्यकारणायै । परमेश्वर्यै । पातञ्जलाख्य कल्पोक्तशिवावरण संयुतायै । पाशकोदण्ड सुमभृते । पारिपार्श्वकसन्नुतायै । पिञ्छा विलेपसुमुखायै । पितृतुल्यायै । पिनाकिन्यै । पीतचन्दनसौगन्धायै नमः । ९२०

ओं पीताम्बर सहोद्भवायै । पुण्डरीकपुरीमध्यवर्तिन्यै । पुष्टिवर्धिन्यै । पूरयन्त्यै । पूर्यमाणायै । पूर्णाभायै । पूर्णिमान्तरायै। पृच्छामात्राति शुभदायै । पृथ्वीमण्डलशासिन्यै । पृतनायै । पेशलायै । पेरुमण्डलायै। पैत्ररक्षक्यै। पौष्यै। पौष्ट्रेक्षु कोदण्डायै । पञ्चपञ्चाक्षरीमनवे । पञ्चमीतिथिसंभाव्यायै । पञ्चकोशान्तर-स्थितायै । फणाधिपसमाराध्यायै। फणामणिविभूषितायै नमः। ९४०

ओं बकपुष्पकृतोत्तंसायै नमः । बगलायै। बलिन्यै। बलायै। बालार्कमण्डलाभासायै । बालायै । बालविनोदिन्यै । बिन्दुचक्र-शिवाङ्कस्थायै । बिल्वभूषितमूर्धजायै । बीजापूरफलासक्तायै । बीभत्सावहद्दक्त्रय्यै । बुभुक्षा । वर्जितायै । बुद्धिसाक्षिण्यै । बुधवर्षकायै । बृहत्यै । बृहदारण्यनुतायै । बृहस्पती डितायै । बेराख्यायै। बैन्दवाकारवैरिञ्चसुषिरान्तरायै। बोद्ध्र्यै नमः। ९६०

ओं बोधायनायै नमः । बौद्ध दर्शनायै । बन्धमोचिन्यै । भट्टारिकायै। भद्रकाल्यै। भारतीभायै। भिषग्वरायै । भित्तिकायै । भिन्नदैत्याङ्गायै। भिक्षाटनसहानुगायै। भीषणायै। भीतिरहितायै । भुवनत्रय शङ्करायै। भूतघ्न्यै। भूत दमन्यै । भूतेशालिङ्गनोत्सुकायै । भूतिभूषितसर्वाङ्ग्यै । भृग्वङ्गिर मुनिप्रियायै । भृङ्गिनाट्य-विनोदज्ञायै । भैरवप्रीतिदायिन्यै नमः। ९८०

ओं भोगिन्यै नमः । भोगशमन्यै । भोगमोक्षप्रदायिन्यै । भौमपूज्यायै । भण्डहन्त्र्यै । भग्नदक्षक्रतुप्रियायै । मकारपञ्चम्यै । मह्यायै । मदन्यै । मकरध्वजायै । मत्स्याक्ष्यै । मधुरावासायै । मन्वश्रहृदयाश्रयायै । मार्ताण्डविनुतायै । माणिभद्रेड्यायै । माधवार्चितायै । मायायै । मारप्रियायै । मारसखीड्यायै । माधुरीमनसे नमः। १०००

ओं माहेश्वर्यै नमः । माहिषघ्न्यै । मिथ्यावादप्रणाशिन्यै । मीनाक्ष्यै । मीनसंसृष्टायै । मीमांसाशास्त्रलोचनायै । मुग्धाङ्ग्यै । मुनिबृन्दार्च्यायै । मुक्तिदायै । मूलविग्रहायै । मूषिकारूढजनन्यै । मूढभक्तिमदर्चितायै । मृत्युञ्जयसत्यै । मृग्यायै । मृगालेपन लोलुपायै । मेधाप्रदायै । मेखलाढ्यायै । मेघवाहनसेवितायै । मेनात्मजायै । मैथिलीशकृतार्चनपदाम्बुजायै नमः । १०२०

ओं मैत्र्यै नमः । मैनाकभगिन्यै । मोहजालप्रणाशिन्यै । मोदप्रदायै । मौलिगेन्दुकलाधरकिरीटभाजे । मौहूर्तलग्नवरदायै । मञ्जीरायै । मञ्जुभाषिण्यै । मर्मज्ञात्र्यै । महादेव्यै । यमुनायै । यज्ञसंभावायै । यातनारहितायै । यानायै । यामिनीपूजकेष्टदायै । युक्तायै । यूपायै । यूथिकार्च्यायै । योगायै । योगेशयोगदायै (यक्षराजसखान्तरायै) नमः । १०४०

ओं । रथिन्यै नमः । रजन्यै । रत्नगर्भायै । रक्षितभूरुहायै । रमायै । रसक्रियायै । रश्मिमाला-सन्नुतवैभवायै । रक्तायै । रसायै । रत्यै । रथ्यायै । रणन्मञ्जीरनू-पुरायै । रक्षायै । रविध्वजाराध्यायै । रमण्यै । रविलोचनायै । रसज्ञायै । रसिकायै । रक्तदन्तायै । रक्षणलम्पटायै नमः । १०६०

ओं रक्षोघ्नजपसन्तुष्टायै । रक्ताङ्गापाङ्गलोचनायै । रत्नद्वीपव-नान्तस्थायै । रजनीशकलाधरायै । रत्नप्राकारनिलयायै । रणमध्यायै । रमार्थदायै । रजनीमुखसंपूज्यायै । रत्नसानुस्थितायै । रय्यै नमः । १०७०

——*——

# श्रीप्रणवसहस्रनामावलिः

अस्य श्रीप्रणवसहस्रनामस्तोत्रमहामन्त्रस्य ब्रह्मा ऋषिः, अनुष्टुप् छन्दः, परमात्मा देवता, अं बीजं, उं शक्तिः, मं कीलकं, आत्मज्ञानसिद्ध्यै जपे विनियोगः । ध्यानं-

ओंकारं निगमैकवेद्यमनिशं वेदान्ततत्वास्पदं
चोत्पत्तिस्थितिनाशहेतुममलं विश्वस्य विश्वात्मकम् ।
विश्वत्राणपरायणं श्रुतिशतैस्संप्रोच्यमानं प्रभुं
सत्यं ज्ञानमनन्तमूर्तिममलं शुद्धात्मकं तं भजे ॥

ओं । ओङ्काराय नमः । तारकाय । सूक्ष्माय । प्राणाय । सर्वगोचराय । क्षाराय । क्षितये । उत्पत्तिहेतुकाय । नित्याय । निरत्ययाय । शुद्धाय । निर्मलात्मने । निराकृतये । निराधाराय । सदानन्दाय । शाश्वताय । परतः परस्मै । मनसो गतिनिहन्त्रे । गम्यानामुत्तमोत्तमाय । अकारात्मने नमः ॥ २० ॥

ओं मकारात्मने नमः । बिन्दुरूपिणे । कलाधराय । उकारात्मने । महावेद्याय । महापातकनाशनाय । इन्द्राय । परतराय । वेदाय । वेदवेद्याय । जगद्गुरवे । वेदकृते । वेदवेत्रे । वेदान्तार्थस्वरूपकाय । वेदान्तवेद्याय । नतुलाय । कंजजन्मने । कामाकृतये । खरूपिणे । खगवाहिने नमः ॥ ४० ॥

ओं खगाय नमः । खगतराय । खाद्याय । खभूताय । खगताय । खगमाय । खगनायकाय । खरमाय । खजलाय । खालाय । खगेश्वराय । खगवाहाय । गन्त्रे । गमयित्रे । गम्याय । गमनातिकराय । गतये । घण्टानिनादाय । घण्टेयपरानन्दनाय । घण्टानादपराय नमः ॥ ६० ॥

ओं घण्टानादवते नमः । गुणाय । घस्राय । घनितचिद्रूपाय । घनानां जलदायकाय । चर्यापूज्याय । चिदानन्दाय । चिराचिरतराय । चितये । चितिदाय । चितिगन्त्रे । चर्मवते । चलनाकृतये । चञ्चलाय । चालकाय । चाल्याय । छायावते । छादनात्ययाय । छायाच्छायाय । प्रतिच्छायाय नमः ।। ८० ।।

ओं जंजपूकाय नमः । महामतये । जालग्राह्याय । जलाकाराय ।जालिने। जालविनायकाय। झटिति प्रतिधौरेयाय । झञ्झामारुतसेविताय। टङ्काय। टंककर्त्रे। टङ्ककार्यवशानुगाय । टिट्टिलाय । निष्ठुराय । कृष्टाय । कमठाय । पृष्ठगोचराय । काठिन्यात्मने । कठोरात्मने । कण्ठाय । कौटीरगोचराय नमः ।। १०० ।।

ओं डमरुध्वानसानन्दाय नमः । डांभिकानां पराङ्मुखाय । डंभेतरसमाराध्याय । डांभिकानां विडंबनाय । ढक्काकल-कलध्वानाय । अणिम्ने । अनुत्तमसुन्दराय । तारतम्यफलाय । तल्पाय। तल्पशायिने। सतारकाय। तर्तव्याय। तारणाय। ताराय । तारकानाथभूषणाय। हिरण्यबाहवे। सेनान्ये । देशानां च दिशां पतये। पीतवर्णाय। महावृक्षाय नमः ।। १२० ।।

ओं हरिकेशाय नमः। उपवीतवते। स्तायूनामग्रण्ये। श्रीमते । निचेरवे । परिचारिकाय । बिल्मिने । कवचिने । वर्मिणे । मत्तेभगविरूथवते । वञ्चकाय । परिवञ्चिने । कर्माराय । कुंभकारकाय। पक्षिपुंजोपजीविने। मृगयवे। श्रुतकाय। नयाय। भक्तपापमहद्रापये। दरिद्राय नमः ।। १४० ।।

ओं नीललोहिताय नमः । मीढ्वते । मीढुष्टमाय । शंभवे । शत्रुव्याधिने । बभ्लुशाय। स्तोकादिरक्षकाय। कर्त्रे। वाट्याय।

उर्वर्याय । आलाद्याय । नाथाय । सूद्याय । हेतिसाहस्रसंयुताय । सृकाहस्ताय । महापद्माय । शरव्यायुतमण्डनाय । सर्वोपहत-कामाय । जरित्रस्थप्रतारकाय । अन्नबाणाय नमः ॥ १६० ॥

ओं वातबाणाय नमः । वर्षबाणकरांबुजाय । दशप्राच्यादि-वन्द्याय । सस्पिंजरकलेबराय । जपैकशीलाय । संजप्याय । समजग्धये । सपीतकाय । यमादिकुशलाय । गौराय । दिवारात्रैकवृष्टिदाय । पश्चावये । अवये । दित्यौहे । तुर्यौहे । पष्ठौहे । वेहताय । नाथाय । घुम्नवाजादिनायकाय । अभिरक्ताय नमः ॥ १८० ॥

ओं वीचीवक्त्राय नमः । वेदानां हृदयाब्जगाय । आनिर्ह-ताय । विक्षीणाय । लोप्याय । उलप्याय । गुरमाणाय । पर्णशद्याय । सूर्म्याय । ऊर्मये । ओं । अयाय । शिवाय । शिवतमाय । शास्त्रे । घोराघोरतनुद्वयाय । गिरिपर्वतनाथाय । शिपिविष्टाय । पशोः पतये । अप्रगल्भाय नमः ॥ २००

ओं प्रगल्भाय नमः । मल्लानां नायकोत्तमाय । प्रहिताय । प्रमृशाय । दूताय । क्षत्रे । स्यन्दनमध्यगाय । स्थपतये । ककुभाय । वन्याय । कक्ष्याय । पतंजलये । सूताय । हंसाय । निहन्त्रे । कपर्दिने । पिनाकवते । आयुधाय । स्वायुधाय । कृत्तिवाससे नमः ॥ २२० ॥

ओं जितेन्द्रियाय नमः । यातुधाननिहन्त्रे । कैलासे दक्षिणे स्थिताय । सुवर्णमुखीतीरस्थाय । वृद्धाचलनितम्बगाय । मणिमुक्तामयोद्भासिने । कट्याय । काट्याय । महाद्रिधृते । हृदयाय । निवेष्प्याय । हरित्याय । शुष्क्याय । सिकत्याय । प्रवाह्याय । भवरुद्रादिनामवते । भीमाय । भीमपराक्रान्ताय । विक्रान्ताय । सपराक्रमाय नमः ॥ २४० ॥

ओं शूराय नमः । शूरनिहन्त्रे । मन्युमते । मन्युनाशनाय । भामिताय । भामवते । भामाय । उक्ष्णे । उक्षितरक्षकाय । हविष्मते । मखवते । मखानां फलदायकाय । अघघ्नाय । दोषजालघ्नाय । व्याध्यामयविनाशनाय । सुम्नरूपाय । असुम्नरूपाय । जगन्नाथाय । अधिवाचकाय । व्राताय नमः ॥ २६० ॥

ओं व्रातनाथाय नमः । व्रात्याय । व्रात्यादिदूरगाय । ब्रह्मदत्ताय । चेकितानाय । देवदत्ताय । अतिसंमताय । श्रमणाय । अश्रमणाय । पुण्याय । पुण्यफलाय । आश्रमाणां फलप्रदाय । कालाय । कालयित्रे । कल्याय । कालकालाय । कलाधराय । धनुष्मते । इषुमते । धन्वाविने नमः ॥ २८० ॥

ओं आततायिने नमः । सत्यादिनिलयाधाराय । काकुराय । काकुवते । बलाय । राकाकालविधात्रे । विश्वरक्षैकदक्षिणाय । अग्रेवधाय । दूरेवधाय । शंतमाय । मयस्कराय । कालभावाय । कालकर्त्रे । ऋचां भावैकवेदनाय । यजुषां सर्वमर्मस्थाय । साम्नां सारैकगोचराय । अङ्गिरसे । पूर्वस्मै । अवध्याय । ब्राह्मणमध्यगाय नमः ॥ ३०० ॥

ओं मुक्तानां गतये नमः । पुण्यापुण्यहराय । हराय । उक्थ्याय । उक्थ्यकाराय । उक्थिने । ब्रह्मणे । क्षत्राय । विशे । अन्तिमाय । धर्माय । धर्महराय । धर्म्याय । धर्मिणे । धर्मपरायणाय । नित्याय । अनित्याय । क्षराय । क्षान्ताय । वेगवते नमः ॥ ३२० ॥

ओं अमिताशनाय नमः । पुण्यवते । पुण्यकृते । पूताय । पुरुहूताय । पुरुष्टुताय । अर्चिष्मते । अर्चिताय । कुंभाय । कीर्तिमते । कीर्तिदाय । अफलाय । स्वाहाकाराय । वषट्काराय । हन्तकाराय । स्वधाभिधाय । भूतकृते । भूतभृते । भर्त्रे । द्विबर्हाय नमः ॥ ३४० ॥

ओं द्वंद्वनाशनाय नमः । मुनये । पित्रे । विराजे । वीराय । देवाय । दिनेश्वराय । तारकायै । तारकाय । तूर्णाय । तिग्मरश्मये । त्रिनेत्रवते । तुल्याय । तुल्यहराय । अतुल्याय । त्रिलोकीनायकाय । त्रुटये । तत्र्यै । तार्याय । त्रिभुवनीतीर्णाय नमः ।। ३६० ।।

ओं तीराय नमः । तीरण्ये । सतीराय । तीरगाय । तीव्राय । तीक्ष्णरूपिणे । तीव्रिणे । अर्थाय । अनर्थाय । असमर्थाय । तीर्थरूपिणे । तीर्थकाय । दायदाय । देयदात्रे । परि(प्र)पूजिताय । दायभुजे । दायहन्त्रे । दामोदरगुणांबुधये । धनदाय । धनविश्रान्ताय नमः ।। ३८० ।।

ओं अधनदाय नमः । धननाशकाय । निष्ठुराय । नारशायिने । नेत्रे । नायकाय । उत्तमाय । नैकाय । अनेककराय । नान्याय । नारायणसमाय । प्रभवे । नूपुराय । नूपुरिणे । नेयाय । नरनारायणाय । उत्तमाय । पात्रे । पालयित्रे । पेयाय नमः ।। ४००

ओं पिबते नमः । सागरपूर्णिम्ने । पूर्वाय । अपूर्वाय । पूर्णिम्ने । पुण्यमानसलालसाय । पेपीयमानाय । पापघ्नाय । पञ्चयज्ञमयाय । पुरवे । परमात्मने । परेशाय । पावनात्मने । परात्पराय । पञ्चबुद्धिमयाय । पञ्चप्रयाजादिमयाय । परस्मै । प्राणभृते । प्राणघ्ने । प्राणाय नमः ।। ४२० ।।

ओं प्राणहृते नमः । प्राणचेष्टिताय । पञ्चभूतमयाय । पञ्चकरणैश्चोपबृंहिताय । प्रेयसे । प्रेयस्तमाय । प्रीताय । प्रेयस्विने । प्रेयसीरताय । पुरुषार्थाय । पुण्यशीलाय । पुरुषाय । पुरुषोत्तमाय । फलाय । फलस्य दात्रे । फलानामुत्तमोत्तमाय । बिंबाय । बिंबात्मकाय । बिंबिने । बिंबिनीमानसोल्लासाय नमः ।। ४४० ।।

ओं बधिराय नमः। अबधिराय। बालाय । बाल्यावस्थाय । बलप्रियाय। एकस्मै। द्वयिने। दशबलाय । पञ्चकिने। अष्टकिने। पुंसे। भगाय। भगवते। फल्गवे । भाग्याय। भल्लाय। मण्डिताय । भवते। भवदायादाय। भवाय नमः ॥ ४६० ॥

ओं भुवे नमः । भूमिदैवताय । भवान्ये । भवविद्वेषिणे । भूतनित्याय । प्रचारिताय । भाषायै । भाषयित्रे । भाष्याय । भावकृते । भाष्यवित्तमाय। मन्दाय। मलिनविच्छेदाय। मालिने । मालायै। मरुते। गरुते। मूर्तिमते। अपुनर्वेद्याय। मुनिबृंदाय नमः ॥ ४८० ॥

ओं मुनीश्वराय नमः । मरवे । मरुजालाय । मेरवे । मरुद्गणनिषेविताय । मर्यादास्थापनाध्यक्षाय । मर्यादाप्रविभं-जनाय । मान्यमानयित्रे । मान्याय । मानदाय । मानगोचराय । यास्काय। यूने। यौवनाढ्याय। युवतीभिः पुरस्कृताय। वामन्ये। भामन्ये। भारूपाय। भास्करद्युतये। संयद्वामाय नमः ॥ ५०० ॥

ओं महावामाय नमः । सिद्धये । संसिद्धिकल्पनाय । सिद्धसङ्कल्पाय। एनोघ्नाय। अनूचानाय। महामनसे। वामदेवाय । वसिष्ठाय । ज्येष्ठाय। श्रेष्ठाय। महेश्वराय । मन्त्रिणे। वाणिजाय । दिव्याय । भुवन्तये । वारिवस्कृताय । कार्यकारणसंधात्रे । निदानाय । मूलकारणाय नमः ॥ ५२० ॥

ओं अधिष्ठानाय नमः । विश्रमाढ्याय । अविवर्ताय । केवलाय । अणिम्ने । महिम्ने । वेत्रे । प्रथिम्ने । पृथुलाय । पृथवे । जीवाय। जैवाय। प्राणधर्त्रे। करुणाय। मैत्रिकाय। बुधाय । ऋचां जालाय। ऋचां कर्त्रे । ऋङ्मुखाय। ऋषिमण्डलाय नमः ॥ ५४०

ओं रूढाय नमः । रूढिने । रुड्भुवे । रूढिनिष्ठाय । रूपविवर्जिताय । स्वराय । हलाय । हल्याय । स्पर्शाय । ऊष्मणे । आन्तराय । विशोकाय । विमोहाय । यस्मै । तस्मै । जगन्मयाय । एकस्मै । अनेकाय । पीड्याय । शतार्धाय नमः ।। ५६० ।।

ओं शलाय नमः । बृहते । सहस्रार्धाय । सहस्राय । इन्द्रगोपाय । पङ्कजाय । पद्मनाभाय । सुराध्यक्षाय । पद्मगर्भाय । प्रतापवते । वासुदेवाय । जगन्मूर्तये । संधात्रे । धातवे । उत्तमाय । रहस्याय । परमाय । गोप्याय । गुह्याय । अद्वैतविस्मिताय नमः ।। ५८० ।।

ओं आश्चर्याय नमः । अतिगंभीराय । जलबुद्बुदसागराय । संसारविषपीयूषाय । भववृश्चिकमान्त्रिकाय । भवगर्तसमुद्धर्त्रे । भवव्याघ्रवशंकराय । भवग्रहमहामन्त्राय । भवभूतविनाशनाय । पद्ममित्राय । पद्मबन्धवे । जगन्मित्राय । कवये । मनीषिणे । परिभुवे । याथातथ्यविधायकाय । दूरस्थाय । अन्तिकस्थाय । शुभ्राय । अकायाय नमः ।। ६०० ।।

ओं अव्रणाय नमः । कौषीतिकिने । तलवकाराय । नानाशाखाप्रवर्तकाय । उद्गीथाय । परमोद्गात्रे । शस्त्राय । स्तोमाय । मखेश्वराय । अश्वमेधाय । क्रतूच्छ्रायाय । क्रतवे । क्रतुमयाय । अक्रतवे । पृषदाज्याय । वसन्ताज्याय । ग्रीष्माय । शरदे । हविषे । ब्रह्मताताय नमः ।। ६२० ।।

ओं विराट्ताताय नमः । मनुताताय । जगत्ताताय । सर्वताताय । सर्वधात्रे । जगद्बुध्नाय । जगन्निधये । जगद्वीचीतरङ्गाणामाधाराय । पदाय । जगत्कल्लोलपाथोधये । जगदङ्कुरकंदकाय । जगद्वल्लीमहाबीजाय । जगत्कंदसमुद्धराय । सर्वोपनिषदां कंदाय । मूलकन्दाय । मुकुन्दाय । एकाम्रनायकाय । धीमते । जंबुकेशाय । महातटाय नमः ।। ६४० ।।

ओं न्यग्रोधाय नमः । उदुंबराय । अश्वत्थाय । कूटस्थाय । स्थाणवे । अद्भुताय । अतिगम्भीरमहिम्ने । चित्रशक्तये । विचित्रवते । चित्रवैचित्र्याय । मायाविने । माययावृताय । कपिंजलाय । पिंजराय । चित्रकूटाय । महारथाय । अनुग्रहपदाय । बुद्धये । अमृताय । हरिवल्लभाय नमः ।। ६६० ।।

ओं पद्मप्रियाय नमः । परमात्मने । पद्महस्ताय । पद्माक्षाय । पद्मसुन्दराय । चतुर्भुजाय । चन्द्ररूपाय । चतुरानन-रूपभाजे । आह्लादजनकाय । पुष्टये । शिवार्धाङ्गविभूषणाय । दारिद्र्यशमनाय । प्रीताय । शुक्लमाल्यांबरावृताय । भास्कराय । बिल्वनिलयाय । वराहाय । वसुधापतये । यशस्विने । हेममालिने नमः ।। ६८०

ओं धनधान्यकराय नमः । वसवे । वसुप्रदाय । हिरण्याङ्गाय । समुद्रतनयार्चिताय । दारिद्र्यध्वंसनाय । देवाय । सर्वोपद्रववारणाय । त्रिकालज्ञानसंपन्नाय । ब्रह्मविष्णुशिवात्मकाय । रात्रये । प्रभायै । यज्ञरूपाय । भूतये । मेधाविचक्षणाय । प्रजापतये । महेन्द्राय । सोमाय । धनेश्वराय । पितृभ्यो नमः ।। ७०० ।।

ओं वसुभ्यो नमः । वायवे । वह्नये । प्राणेभ्यः । ऋतवे । मनवे । आदित्याय । हरिदश्वाय । तिमिरोन्मथनाय । अंशुमते । तमोऽभिघ्नाय । लोकसाक्षिणे । वैकुण्ठाय । कमलापतये । सनातनाय । लीलामानुषविग्रहाय । अतीन्द्राय । ऊर्जिताय । प्रांशवे । उपेन्द्राय नमः ।। ७२० ।।

ओं वामनाय नमः । बलये । हंसाय । व्यासाय । संभवाय । भवाय । भवपूजिताय । नैकरूपाय । जगन्नाथाय । जितक्रोधाय ।

प्रमोदनाय । अगदाय । मन्त्रविदे । रोगहर्त्रे । प्रभावनाय । चण्डांशवे । शरण्याय । श्रीमते । अतुलविक्रमाय । ज्येष्ठाय नमः ॥ ७४० ॥

ओं शक्तिमतां नाथाय नमः । प्राणिनां प्राणदायकाय । मत्स्यरूपाय । कुंभकर्णप्रभेत्रे । विश्वमोहनाय । लोकत्रयाश्रयाय । वेगिने । बुधाय । श्रीदाय । सतां गतये । शब्दातिगाय । गभीरात्मने । कोमलाङ्गाय । प्रजागराय । वर्णश्रेष्ठाय । वर्णबाह्याय । कर्मकर्त्रे । समदुःख सुखाय । राशये । विशेषाय नमः ॥ ७६० ॥

ओं विगतज्वराय नमः । देवादिदेवाय । देवर्षये । देवासुराभयप्रदाय । सर्वदेवमयाय । शार्ङ्गपाणये । उत्तमविग्रहाय । प्रकृतये । पुरुषाय । अजय्याय । पावनाय । ध्रुवाय । आत्मवते । विश्वंभराय । सामगेयाय । क्रूराय । पूर्वाय । कलानिधये । अव्यक्त लक्षणाय । व्यक्ताय नमः ॥ ७८० ॥

ओं कलारूपाय नमः । धनंजयाय । जयाय । जरारये । निश्शब्दाय । प्रणवाय । स्थूलसूक्ष्मविदे । आत्मयोनये । वीराय । सहस्राक्षाय । सहस्रपदे । सनातनतमाय । स्रग्विणे । गदापद्मरथाङ्ग-धृते । चिद्रूपाय । निरीहाय । निर्विकल्पाय । सनातनाय । शतमूर्तये । सहस्राक्षाय नमः ॥ ८०० ॥

ओं घनप्रज्ञाय नमः । सभापतये । पुण्डरीकशयाय । विप्राय । द्रवाय । उग्राय । कृपानिधये । अधर्मशत्रवे । अक्षोभ्याय । ब्रह्मगर्भाय । धनुर्धराय । गुरुपूजारताय । सोमाय । कपर्दिने । नीललोहिताय । विश्वमित्राय । द्विजश्रेष्ठाय । रुद्राय । स्थाणवे । विशांपतये नमः ॥ ८२० ॥

ओं वालखिल्याय नमः । चण्डाय । कल्पवृक्षाय । कलाधराय । शङ्खाय । अनिलाय । सुनिष्पन्नाय । शूराय । कव्यहराय । गुरवे । पवित्रपादाय । पापारये । दुर्धराय । दुस्सहाय । अभयाय । अमृताशयाय । अमृतवपुषे । वाङ्मयाय । सदसन्मयाय । निदानगर्भाय नमः ॥ ८४० ॥

ओं निर्व्याजाय नमः । मध्यस्थाय । सर्वगोचराय । हृषीकेशाय । केशिघ्ने । प्रीतिवर्धनाय । वामनाय । दुष्टदमनाय । धृतये । कारुण्यविग्रहाय । सन्यासिने । शास्त्रतत्त्वज्ञाय । व्यासाय । पापहराय । बदरीनिलयाय । शान्ताय । भूतावासाय । गुहाश्रयाय । पूर्णाय । पुराणाय नमः ॥ ८६० ॥

ओं पुण्यज्ञाय नमः । मुसलिने । कुण्डलिने । ध्वजिने । योगिने । जेत्रे । महावीर्याय । शास्त्रिणे । शास्त्रार्थतत्त्वविदे । वहनाय । शक्तिसंपूर्णाय । स्वर्गदाय । मोक्षदायकाय । सर्वात्मने । लोकलोकज्ञाय । सर्गस्थित्यन्तकारकाय । सर्वलोकसुखाकाराय । क्षयवृद्धिविवर्जिताय । निर्लेपाय । निर्गुणाय नमः ॥ ८८० ॥

ओं सूक्ष्माय नमः । निर्विकाराय । निरंजनाय । अचलाय । सत्यवादिने । लोहिताक्षाय । यूने । अध्वराय । सिंहस्कन्धाय । महासत्त्वाय । कालात्मने । कालचक्रभृते । परस्मै ज्योतिषे । विश्वदृशे । विश्वरोगघ्ने । विश्वात्मने । विश्वभूताय । सुहृदे । शान्ताय । विकण्टकाय नमः ॥ ९०० ॥

ओं सर्वगाय नमः । सर्वभूतेशाय । सर्वभूताशयस्थिताय । आभ्यन्तरतमश्छेत्रे । पत्यै । अजाय । हरये । नेत्रे । सदानताय । कर्त्रे । श्रीमते । धात्रे । पुराणदाय । स्रष्ट्रे । विष्णवे । देवदेवाय । सच्चिदाश्रयाय । नित्याय । सर्वगताय । भानवे नमः ॥ ९२० ॥

ओं उग्राय नमः । प्रजेश्वराय । सवित्रे । लोककृते । हव्यवाह्नाय । वसुधापतये । स्वामिने । सुशीलाय । सुलभाय । सर्वज्ञाय । सर्वशक्तिमते । नित्याय । संपूर्णकामाय । कृपापीयूष सागराय । अनन्ताय । श्रीपतये । रामाय । निर्गुणाय । लोकपूजिताय । राजीवलोचनाय नमः ।। ९४० ।।

ओं श्रीमते नमः । शरणत्राणतत्पराय । सत्यव्रताय । व्रतधराय । साराय । वेदान्तगोचराय । त्रिलोकीरक्षकाय । यज्वने । सर्वदेवादिपूजिताय । सर्वदेवस्तुताय । सौम्याय । ब्रह्मण्याय । मुनिसंस्तुताय । महते । योगिने । सर्वपुण्यविवर्धनाय । स्मृतसर्वाघनाशनाथ । पुरुषाय । महते । पुण्योदयाय नमः ।। ९६०

ओं महादेवाय नमः । दयासाराय । स्मितानानाय । विश्वरूपाय । विशालाक्षाय । बभ्रवे । परिबृढाय । दृढाय । परमेष्ठिने । सत्यसाराय । सत्यसंधानाय । धार्मिकाय । लोकज्ञाय । लोकवंद्याय । सेव्याय । लोककृते । पराय । जितमायाय । दयाकाराय । दक्षाय नमः ।। ९८० ।।

ओं सर्वजनाश्रयाय नमः । ब्रह्मण्याय । देवयोनये । सुन्दराय । सूत्रकारकाय । महर्षये । ज्योतिर्गणनिषेविताय । सुकीर्तये । आदये । सर्वस्मै । सर्वावासाय । दुरासदाय । स्मितभाषिणे । निवृत्तात्मने । धीरोदात्ताय । विशारदाय । अध्यात्मयोगनिलयाय । सर्वतीर्थमयाय । सुराय । यज्ञस्वरूपिणे नमः ।। १०००

ओं यज्ञज्ञाय नमः । अनन्तदृष्टये । गुणोत्तराय नमः ।। १००३

* * *

# श्रीदक्षिणामूर्तिसहस्रनामस्तोत्रम्

आदिदेवो दयासिन्धुरखिलागमदेशिकः ।
दक्षिणामूर्तिरतुलः शिक्षितासुरविक्रमः ॥ १ ॥

कैलासशिखरोल्लासी कमनीयनिजाकृतिः ।
वीरासनसमासीनो वीणापुस्तलसत्करः ॥ २ ॥

अक्षमालालसत्पाणिश्चिन्मुद्रितकरांबुजः ।
अपस्मारोपरिन्यस्तसव्यपादसरोरुहः ॥ ३ ॥

चारुचामीकराकारजटालार्पितचन्द्रमाः ।
अर्धचन्द्राभनिटिलपाटीरतिलकोज्ज्वलः ॥ ४ ॥

करुणालहरीपूर्ण कर्णान्तायतलोचनः ।
कर्णदिव्योल्लसद्दिव्यमणिकुण्डलमण्डितः ॥ ५ ॥

वरवज्रशिलादर्शपरिभाविकपोलभूः ।
चारुचांपेयपुष्पाभनासिकापुटरंजितः ॥ ६ ॥

दन्तालिकुसुमोत्कृष्टकोमलाधरपल्लवः ।
मुग्धस्मितपरीपाकप्रकाशितरदाङ्कुरः ॥ ७ ॥

अनाकलितसादृश्यचिबुकश्रीविराजितः ।
अनर्घरत्नग्रैवेय विलसत्कंबुकन्धरः ॥ ८ ॥

माणिक्यकंकणोल्लासि करांबुजविराजितः ।
मुक्ताहारलसत्तुङ्ग विपुलोरस्कराजितः ॥ ९ ॥

आवर्तनाभिरोमालिवलित्रययुतोदरः ।
विशङ्कटकटिन्यस्त वाचाल मणिमेखलः ॥ १० ॥

करिहस्तोपमेयोरुरादर्शोज्ज्वलजानुकः ।
कन्दर्पतूणीजिज्जंघो गुल्फोदञ्चितनूपुरः ॥ ११ ॥

मणिमंजीर किरण किंजल्कितपदांबुजः ।
शाणोल्लीढमणिश्रेणीरम्यांघ्रिनखमण्डलः ॥ १२ ॥

आपादकर्णकामुक्तभूषाशतमनोहरः ।
सनकादिमहायोगिसमाराधितपादुकः ॥ १३ ॥

यक्षकिन्नरगन्धर्वस्तूयमानात्मवैभवः ।
ब्रह्मादिदेवविनुतो योगमायानियोजकः ॥ १४ ॥

शिवयोगी शिवानन्दः शिवभक्तिसमुत्तरः ।
वेदान्तसारसन्दोहः सर्वसत्वावलंबनः ॥ १५ ॥

वटमूलाश्रयो वाग्मी मान्यो मलयजप्रियः ।
सुखदो वाञ्छितार्थज्ञः प्रसन्नवदनेक्षणः ॥ १६ ॥

कर्मसाक्षी कर्ममा(या)यी सर्वकर्मफलप्रदः ।
ज्ञानदाता सदाचारः सर्वपापविमोचनः ॥ १७ ॥

अनाथनाथो भगवान् आश्रितामरपादपः ।
वरप्रदः प्रकाशात्मा सर्वभूतहिते रतः ॥ १८ ॥

व्याघ्रचर्मासनासीनः आदिकर्ता महेश्वरः ।
सुविक्रमः सर्वगतो विशिष्टजनवत्सलः ॥ १९ ॥

चिन्ताशोकप्रशमनो जगदानन्द कारकः ।
रश्मिमान् भुवनेशानो देवासुर सुपूजितः ॥ २० ॥

मृत्युंजयो व्योमके॰॰ः षट्त्रिंशत्तत्वसंग्रहः ।
अज्ञातसंभवो भिक्षुरद्वितीयो दिगंबरः ॥ २१ ॥

समस्तदेवतामूर्तिः सोमसूर्याग्निलोचनः ।
सर्वसाम्राज्यनिपुणो धर्ममार्गप्रवर्तकः ॥ २२ ॥

विश्वाधिकः पशुपतिः पशुपाशविमोचकः ।
अष्टमूर्तिर्दीप्तमूर्तिर्नामोच्चारणमुक्तिदः ॥ २३ ॥

सहस्रादित्यसङ्काशः सदाषोडशवार्षिकः ।
दिव्यकेलीसमायुक्तो दिव्यमाल्यांबरावृतः ॥ २४ ॥

अनर्घरत्नसंपूर्णो मल्लिकाकुसुमप्रियः ।
तप्तचामीकराकारः क्रुद्धदावानलाकृतिः ॥ २५ ॥

निरंजनो निर्विकारो निजा(रा)वासो निराकृतिः ।
जगद्गुरुर्जगत्कर्ता जगदीशो जगत्पतिः ॥ २६ ॥

कामहन्ता काममूर्तिः कल्याणो वृषवाहनः ।
गंगाधरो महादेवो दीनबन्धविमोचनः ॥ २७ ॥

धूर्जटिः खण्डपरशुःसद्गुणो गिरिजासखः ।
अव्ययो भूतसेनेशः पापघ्नः पुण्यदायकः ॥ २८ ॥

उपदेष्टा दृढप्रज्ञो रुद्रो रोगविनाशकः ।
नित्यानन्दो निराधारो हरो देवशिखामणिः ॥ २९ ॥

प्रणतार्तिहरः सोमः सान्द्रानन्दो महामतिः ।
आश्च(ऐश्व)र्यवैभवो देवः संसारार्णवतारकः ॥ ३० ॥

यज्ञेशो राजराजेशो भस्मरुद्राक्षलाञ्छनः ।
अनन्तस्तारकः स्थाणुःसर्वविद्येश्वरो हरिः ॥ ३१ ॥

विश्वरूपो विरूपाक्षः प्रभुः परिबृढो दृढः ।
भव्यो जितारिषड्वर्गो महोदारोऽघनाशनः ॥ ३२ ॥

सुकीर्तिरादिपुरुषो जरामरणवर्जितः ।
प्रमाणभूतो दुर्ज्ञेयः पुण्यः परपुरंजयः ॥ ३३ ॥

गुणाकरो गुणश्रेष्ठः सच्चिदानन्दविग्रहः ।
सुखदः कारणं कर्ता भवबन्धविमोचकः ॥ ३४ ॥

अनिर्विण्णो गुणग्राही निष्कलङ्कः कलंकहा ।
पुरुषः शाश्वतो योगी व्यक्ताव्यक्तः सनातनः ॥ ३५ ॥

चराचरात्मा विश्वात्मा विश्वकर्मा तमोऽपहृत् ।
भुजंगभूषणो भर्गस्तरुणः करुणालयः ॥ ३६ ॥

अणिमादिगुणोपेतो लोकवश्यविधायकः ।
योगपट्टधरो मुक्तो मुक्तानां परमा गतिः ॥ ३७ ॥

गुरुरूपधरः श्रीमान् परमानन्दसागरः ।
सहस्रबाहुः सर्वेशः सहस्रावयवान्वितः ॥ ३८ ॥

सहस्रमूर्धा सर्वात्मा सहस्राक्षः सहस्रपात् ।
निर्विकल्पो निराभासः शान्तः सूक्ष्मः परात्परः ॥ ३९ ॥

सर्वात्मकः सर्वसाक्षी निस्संगो निरुपद्रवः ।
निर्लेपः सकलाध्यक्षः चिन्मयस्तमसः परः ॥ ४० ॥

ज्ञानवैराग्यसंपन्नो योगानन्दमयः शिवः ।
शाश्वतैश्वर्यसंपूर्णो महायोगीश्वरेश्वरः ॥ ४१ ॥

सहस्रशक्तिसंयुक्तः पुण्यकायो दुरासदः ।
तारकब्रह्म संपूर्णः तपस्विजनसंवृतः ॥ ४२ ॥

विधीन्द्रामरसंपूज्यो ज्योतिषां ज्योतिरुत्तमः ।
निरक्षरो निरालंबः स्वात्मारामो विकर्तनः ॥ ४३ ॥

निरवद्यो निरातङ्को भीमो भीमपराक्रमः ।
वीरभद्रः पुरारातिर्जलन्धरशिरोहरः ॥ ४४ ॥

अन्धकासुरसंहर्ता भगनेत्रभिदद्भुतः ।
विश्वग्रासोऽधर्मशत्रुर्ब्रह्मज्ञानै(नन्दै)कमन्दिरः ॥ ४५ ॥

अग्रेसरस्तीर्थभूतः सितभस्मावगुण्ठनः ।
अकुण्ठमेधाः श्रीकण्ठो वैकुण्ठपरमप्रियः ॥ ४६ ॥

ललाटोज्ज्वलनेत्राब्जः तुषारकरशेखरः ।
गजासुरशिरश्छेत्ता गंगोद्भासितमूर्धजः ॥ ४७ ॥

कल्याणाचलकोदण्डः कमलापतिसायकः ।
वारां शेवधितूणीरः सरोजासनसारथिः ॥ ४८ ॥

त्रयीतुरंगसंक्रान्तो वासुकिज्याविराजितः ।
रवीन्दुचरणाचारिधरारथविराजितः ॥ ४९ ॥

त्रय्यन्तप्रग्रहोदारः उडुकण्ठारवोज्ज्वलः ।
उत्तानभल्लवामाढ्यो लीलाविजितदानवः ॥ ५० ॥

जातु प्रपञ्चजनितजीवनोपायनोत्सुकः ।
संसारार्णवसंमग्न समुद्धरणपण्डितः ॥ ५१ ॥

मत्तद्विरदधिक्कारिगतिवैभवमंजुलः ।
मत्तकोकिलमाधुर्य रसनिर्भरनिस्वनः ॥ ५२ ॥

कैवल्योदितकल्लोललीलाताण्डवपण्डितः ।
विष्णुर्जिष्णुर्वासुदेवः प्रभविष्णुः पुरातनः ॥ ५३ ॥

वर्धिष्णुर्वरदो वैद्यो हरिर्नारायणोऽच्युतः ।
अज्ञानवनदावाग्निः प्रज्ञाप्रासादभूपतिः ॥ ५४ ॥

सर्वभूषितसर्वाङ्गः कर्पूरोज्ज्वलिताकृतिः ।
अनादिमध्यनिधनो गिरिशो गिरिजापतिः ॥ ५५ ॥

वीतरागो विनीतात्मा तपस्वी भूतभावनः ।
देवासुरगुरुर्ध्येयो(देवो) देवासुरनमस्कृतिः ॥ ५६ ॥

देवादिदेवो देवर्षिर्देवासुरवरप्रदः ।
सर्वदेवमयोऽचिन्त्यो देवतात्माऽऽत्मसंभवः ॥ ५७ ॥

निर्लेपो निष्प्रपञ्चात्मा निर्व्यग्रो विघ्ननाशनः ।
एकज्योतिर्निरानन्दो व्याप्तमूर्तिरनाकुलः ॥ ५८ ॥

निरवद्यो बहू(धो)पायो विद्याराशिरकृत्रिमः ।
नित्यानन्दः सुराध्यक्षो निस्संकल्पो निरंजनः ॥ ५९ ॥

निरातङ्को निराकारो निष्प्रपञ्चो निरामयः ।
विद्याधरो वियत्केशो मार्कण्डयौवनः प्रभुः ॥ ६० ॥

भैरवो भैरवीनाथः कामदः कमलासनः ।
वेदवेद्यः सुरानन्दो लसज्ज्योतिः प्रभाकरः ॥ ६१ ॥

चूडामणिः सुराधीशो यक्षगेयो हरिप्रियः ।
निर्लेपो नीतिमान् सूत्री श्रीहालाहलसुन्दरः ॥ ६२ ॥

धर्मरक्षो महाराजः किरीटी वन्दितो गुहः ।
माधवो यामिनीनाथः शंबरः शंबरीप्रियः ॥ ६३ ॥

संगीतवेत्ता लोकज्ञः शान्तः कलशसंभवः ।
ब्रह्मण्यो वरदो नित्यः शूली गुरुपरो हरः ॥ ६४ ॥

मार्ताण्डः पुण्डरीकाक्षः कर्मज्ञो लोकनायकः ।
त्रिविक्रमो मुकुन्दार्च्यो वैद्यनाथः पुरन्दरः ॥ ६५ ॥

भाषाविहीनो भाषाज्ञो विघ्नेशो विघ्ननाशनः ।
किन्नरेशो बृहद्भानुः श्रीनिवासः कपालभृत् ।। ६६ ।।

विजयी भूतवाहश्च भीमसेनो दिवाकरः ।
बिल्वप्रियो वसिष्ठेशः सर्वमार्गप्रवर्तकः ।। ६७ ।।

ओषधीशो वामदेवो गोविन्दो नीललोहितः ।
षडर्धनयनः श्रीमान् महादेवो वृषध्वजः ।। ६८ ।।

कर्पूरवीटिकालोलः कर्पूरवरचर्चितः ।
अव्याजकरुणामूर्तिस्त्यागराजः क्षपाकरः ।। ६९ ।।

आश्चर्यविग्रहः सूक्ष्मः सिद्धेशः स्वर्णभैरवः ।
देवराजः कृपासिन्धुरद्वयोऽमितविक्रमः ।। ७० ।।

निर्भेदो नित्यसत्वस्थो निर्योगक्षेम आत्मवान् ।
निरपायो निरासङ्गो निःशब्दो निरुपाधिकः ।। ७१ ।।

भवः सर्वेश्वरः स्वामी भवभीतिविभंजनः ।
दारिद्र्यतृणकूटाग्निः दारितासुरसन्ततिः ।। ७२ ।।

मुक्तिदो मुदितः कुब्जो धार्मिको भक्तवत्सलः ।
अभ्यासातिशयज्ञेयश्चन्द्रमौलिः कलाधरः ।। ७३ ।।

महाबलो महावीर्यो विभुःश्रीशः शुभप्रदः (प्रियः) ।
सिद्धःपुराणपुरुषो रणमण्डलभैरवः ।। ७४ ।।

सद्योजातो वटारण्यवासी पुरुषवल्लभः ।
हरिकेशो महात्राता नीलग्रीवः सुमंगलः ।। ७५ ।।

हिरण्यबाहुस्तिग्मांशुः कामेशः सोमविग्रहः ।
सर्वात्मा सर्वसत्कर्ता ताण्डवो मुण्डमालिकः ।। ७६ ।।

अग्रगण्यः सुगंभीरो देशिको वैदिकोत्तमः ।
प्रसन्नदेवो वागीशः चिन्तातिमिरभास्करः ॥ ७७ ॥

गौरीपतिस्तुङ्गमौलिः मधुराजो महाकविः ।
श्रीधरः सर्वसिद्धेशो विश्वनाथो दयानिधिः ॥ ७८ ॥

अन्तर्मुखो बहिर्दृष्टिः सिद्धवेषो मनोहरः ।
कृत्तिवासाः कृपासिन्धुर्मन्त्रसिद्धो मतिप्रदः ॥ ७९ ॥

महोत्कृष्टः पुण्यकरो जगत्साक्षी सदाशिवः ।
महाक्रतुर्महायज्वा विश्वकर्मा तपोनिधिः ॥ ८० ॥

छन्दोमयो महाज्ञानी सर्वज्ञो देववन्दितः ।
सार्वभौमः सदानन्दः करुणामृतवारिधिः ॥ ८१ ॥

कालकालः कलिध्वंसी जरामरणनाशकः ।
शितिकण्ठश्चिदानन्दो योगिनीगणसेवितः ॥ ८२ ॥

चण्डीशः सुखसंवेद्यः पुण्यश्लोको दिवस्पतिः ।
स्थायी सकलतत्त्वात्मा सदा सेवकवर्धकः ॥ ८३ ॥

रोहिताश्वः क्षमारूपी तप्तचामीकरप्रभः ।
त्रियंबको वररुचिः देवदेवश्चतुर्भुजः ॥ ८४ ॥

विश्वंभरो विचित्रांगो विधाता पुरनाश(शास)नः ।
सुब्रह्मण्यो जगत्स्वामी लोहिताक्षः शिवोत्तमः ॥ ८५ ॥

नक्षत्रमाल्याभरणो भगवान् तमसः परः ।
विधिकर्ता विधानज्ञः प्रधानपुरुषेश्वरः ॥ ८६ ॥

चिन्तामणिः सुरगुरुर्ध्येयो नीराजनप्रियः ।
गोविन्दो राजराजेशो बहुपुष्पार्चनप्रियः ॥ ८७ ॥

सर्वानन्दो दयारूपी शैलजासुमनोहरः ।
सुविक्रमः सर्वगतो हेतुसाधनवर्जितः ॥ ८८ ॥

वृषाङ्को रमणीयाङ्गः सत्कर्ता सामपारगः ।
चिन्ताशोकप्रशमनः सर्वविद्याविशारदः ॥ ८९ ॥

भक्तविज्ञप्तिसन्धाता वक्ता गिरिवराकृतिः ।
ज्ञानप्रदो मनोवासः क्षेम्यो मोहविनाशनः ॥ ९० ॥

सुरोत्तमश्चित्रभानुः सदा वैभवतत्परः ।
सुहृदग्रेसरः सिद्धो ज्ञानमुद्रो गणाधिपः ॥ ९१ ॥

अमरश्चर्मवसनो वाञ्छितार्थफलप्रदः ।
असमानोऽन्तररहितो देवसिंहासनाधिपः ॥ ९२ ॥

विवादहन्ता सर्वात्मा कालः कालविवर्जितः ।
विश्वातीतो विश्वकर्ता विश्वेशो विश्वकारणः ॥ ९३ ॥

योगिध्येयो योगनिष्ठो योगात्मा योगवित्तमः ।
ओंकाररूपो भगवान् बिन्दुनादमयः शिवः ॥ ९४ ॥

चतुर्मुखादिसंस्तुत्यश्चतुर्वर्गफलप्रदः ।
सह्याचलगुहावासी साक्षान्मोक्षरसाकृतिः ॥ ९५ ॥

दक्षाध्वरसमुच्छेत्ता पक्षपातविवर्जितः ।
ओंकारवाचकः शंभुः शंकरः शशिशीतलः ॥ ९६ ॥

पङ्कजासनसंसेव्यः किंकरामरवत्सलः ।
नतदौर्भाग्यतूलाग्निः कृतकौतुकविभ्रमः ॥ ९७ ॥

त्रिलोकमोहनः श्रीमान् त्रिपुण्ड्रांकितमस्तकः ।
क्रौञ्चारिजनकः श्रीमद्गणनाथसुतान्वितः ॥ ९८ ॥

अद्भुतोऽनन्तवरदोऽपरिच्छेद्यात्मवैभवः ।
इष्टापूर्तप्रियः शर्व एकवीरप्रियंवदः ॥ ९९ ॥

ऊहापोहविनिर्मुक्त ओंकारेश्वरपूजितः ।
कलानिधिः कीर्तिनाथः कामेशीहृदयंगमः ॥ १०० ॥

कामेश्वरः कामरूपो गणनाथसहोदरः ।
गाढो गगनगंभीरो गोपालो गोचरो गुरुः ॥ १०१ ॥

गणेशो गायको गोप्ता गाणापत्यगणप्रियः ।
घण्टानिनादरुचिरः कर्णलज्जाविभंजनः ॥ १०२ ॥

केशवः केवलः कान्तश्चक्रपाणिश्चराचरः ।
घनाघनो घोषयुक्तश्चण्डीहृदयनन्दनः ॥ १०३ ॥

चित्रार्पितश्चित्रमयः चिन्तितार्थप्रदायकः ।
छद्मचारी छद्मगतिः चिदाभासश्चिदात्मकः ॥ १०४ ॥

छन्दोमयश्छत्रपतिः छन्दःशास्त्रविशारदः ।
जीवनो जीवनाधारो ज्योतिःशास्त्रविशारदः ॥ १०५ ॥

ज्योतिर्ज्योत्स्नामयो जेता जीमूतवरदायकः ।
जनाघनाशनो जीवो जीवदो जीवनौषधम् ॥ १०६ ॥

जराहरो जाड्यहरो ज्योत्स्नाजालप्रवर्तकः ।
ज्ञानेश्वरो ज्ञानगम्यो ज्ञानमार्गपरायणः ॥ १०७ ॥

तरुस्थस्तरुमध्यस्थो डामरीशक्तिरंजकः ।
तारकस्तारतम्यात्मा टीपस्तर्पणकारकः ॥ १०८ ॥

तुषाराचलमध्यस्थस्तुषारकरभूषणः ।
त्रिसुगन्धस्त्रिमूर्तिश्च त्रिमुखस्त्रिककुद्धरः ॥ १०९ ॥

त्रिलोकीमुद्रिकाभूषः त्रिकालज्ञस्त्रयीमयः ।
तत्वरूपस्तरुस्थायी तन्त्रीवादनतत्परः ॥ ११० ॥

अद्भुतानन्तसंग्रामो ढक्कावादनतत्परः (कौतुकः) ।
तुष्टस्तुष्टिमयः स्तोत्रपाठकोऽति(काति)प्रियस्तवः ॥ १११ ॥

तीर्थप्रियस्तीर्थरतः तीर्थाटनपरायणः ।
तैलदीपप्रियस्तैलपक्वान्नप्रीतमानसः ॥ ११२ ॥

तैलाभिषेकसन्तुष्टस्तिलचर्वणतत्परः ।
दीनार्तिहृद्दीनबन्धुर्दीननाथो दयापरः ॥ ११३ ॥

दनुजारिर्दुःखहन्ता दुष्टभूतनिषूदनः ।
दीनोरुदायको दान्तो दीप्तिमान्दिव्यलोचनः ॥ ११४ ॥

देदीप्यमानो दुर्ज्ञेयो दीनसंमानतोषितः ।
दक्षिणाप्रेमसन्तुष्टो दारिद्र्यबडबानलः ॥ ११५ ॥

धर्मो धर्मप्रदो ध्येयो धीमान्धैर्यविभूषितः ।
नानारूपधरो नम्रो नदीपुलिनसंश्रितः ॥ ११६ ॥

नटप्रियो नाट्यकरो नारीमानसमोहनः ।
नारदो नामरहितो नानामन्त्ररहस्यवित् ॥ ११७ ॥

पतिः पातित्यसंहर्ता परविद्याविकर्षकः ।
पुराणपुरुषः पुण्यः पद्यगद्यप्रदायकः ॥ ११८ ॥

पार्वतीरमणः पूर्णः पुराणागमसूचकः ।
पशूपहाररसिकः पुत्रदः पुत्रपूजितः ॥ ११९ ॥

ब्रह्माण्डभेदनो ब्रह्मज्ञानी ब्राह्मणपालकः ।
भूताध्यक्षो भूतपतिर्भूतभीतिनिवारणः ॥ १२० ॥

भद्राकारो भीमगर्भो भीमसंग्रामलोलुपः ।
भस्मभूषो भस्मसंस्थो भैक्ष्यकर्मपरायणः ॥ १२१ ॥

भानुभूषो भानुरूपो भवानीप्रीतिदायकः ।
भवप्रियो भावरतो भावाभावविवर्जितः ॥ १२२ ॥

भ्राजिष्णुजी(र्जी)वसन्तुष्टो भट्टारो भद्रवाहनः ।
भद्रदो भ्रान्तिरहितो भीमचण्डीपतिर्महान् ॥ १२३ ॥

यजुर्वेदप्रियो याजी यमसंयमसंयुतः ।
रामपूज्यो रामनाथो रत्नदो रत्नहारकः ॥ १२४ ॥

राज्यदो रामवरदो रंजको रतिमार्गधृत् ।
रामानन्दमयो रम्यो राजराजेश्वरो रसः ॥ १२५ ॥

रत्नमन्दिरमध्यस्थो रत्नपूजापरायणः ।
रत्नाकारो लक्षणेशो लक्ष्यदो लक्ष्यलक्षणः ॥ १२६ ॥

लोलाक्षीनायको लोभी लक्षमन्त्रजपप्रियः ।
लंबिकामार्गनिरतो लक्ष्यकोट्यण्डनायकः ॥ १२७ ॥

विद्याप्रदो वीतिहोता वीरविद्याविकर्षकः ।
वाराहीपालको वन्यो वनवासी वनप्रियः ॥ १२८ ॥

वनेचरो वनचरः शक्तिपूज्यः शिखिप्रियः ।
शरच्चन्द्रनिभः शान्तः शक्तः संशयवर्जितः ॥ १२९ ॥

शापानुग्रहदः शंखप्रियः शत्रुनिषूदनः ।
षट्कृत्तिकासुसंपूज्यः षट्शास्त्रार्थरहस्यवित् ॥ १३० ॥

सुभगः सर्वजित्सौम्यः सिद्धमार्गप्रवर्तकः ।
सहजानन्ददः सोमः सर्वशास्त्र रहस्यवित् ॥ १३१ ॥

सर्वजित्सर्ववित्साधुः सर्वधर्म समन्वितः ।
सर्वाध्यक्षः सर्वदेवो महर्षिर्मोहनास्त्रवित् ॥ १३२ ॥

क्षेमङ्करः क्षेत्रपालः क्षयरोगक्षयङ्करः ।
निःसीममहिमा नित्यो लीलाविग्रहरूपधृत् ॥ १३३ ॥

चन्दनद्रवदिग्धाङ्गः चांपेयकुसुमप्रियः ।
समस्तभक्तसुखदः परमाणुर्महाह्रदः ॥ १३४ ॥

आकाशगो दुष्प्रधर्षः कपिलः कालकन्धरः ।
कर्पूरगौरः कुशलः सत्यसन्धो जितेन्द्रियः ॥ १३५ ॥

शाश्वतैश्वर्यविभवः पुष्करः सुसमाहितः ।
महर्षिः पण्डितो ब्रह्मयोनिः सर्वोत्तमोत्तमः ॥ १३६ ॥

भूमिभारार्तिसंहर्ता षडूर्मिरहितो मृडः ।
त्रिविष्टपेश्वरः सर्वहृदयांबुजमध्यगः ॥ १३७ ॥

सहस्रदलपद्मस्थः सर्ववर्णोपशोभितः ।
पुण्यमूर्तिः पुण्यलभ्यः पुण्यश्रवणकीर्तनः ॥ १३८ ॥

सूर्यमण्डलमध्यस्थश्चन्द्रमण्डलमध्यगः ।
सद्भक्तध्याननिगलः शरणागतपालकः ॥ १३९ ॥

श्वेतातपत्ररुचिरः श्वेतचामरवीजितः ।
सर्वावयसंपूर्णः सर्वलक्षणलक्षितः ॥ १४० ॥

सर्वमङ्गलामांगल्यः सर्वकारणकारणम् ।
आमोदमोदजनकः सर्पराजोत्तरीयकः ॥ १४१ ॥

कपाली गोविन्दसिद्धःकान्तिसंवलिताननः ।
सर्वसद्गुरुसंसेव्यो दिव्यचन्दनचर्चितः ॥ १४२ ॥

विलासिनीकृतोल्लासः इच्छाशक्तिनिषेवितः ।
अनन्तोऽनन्तसुखदो नन्दनः श्रीनिकेतनः ॥ १४३ ॥

अमृताब्धिकृतावासो (तोल्लासी) नित्यक्लिन्नो निरामयः ।
अनपायोऽनन्तदृष्टिः अप्रमेयोऽजरोऽमरः ॥ १४४

अनामयोऽप्रतिहतश्चाऽप्रतर्क्योऽमृतोऽक्षरः ।
अमोघसिद्धिराधार आधाराधेयवर्जितः ॥ १४५ ॥

ईषणात्रयनिर्मुक्त ईहामात्रविवर्जितः ।
ऋग्यजुःसामनयन ऋद्धिसिद्धिसमृद्धिदः ॥ १४६ ॥

औदार्यनिधिरापूर्ण ऐहिकामुष्मिकप्रदः ।
शुद्धसन्मात्रसंवित्तास्वरूपसु(मु)खविग्रहः ॥ १४७ ॥

दर्शनप्रथमाभासो दुष्टदर्शनवर्जितः ।
अग्रगण्योऽचिन्त्यरूपः कलिकल्मषनाशनः ॥ १४८ ॥

विमर्शरूपो विमलो नित्यतृप्तो निराश्रयः ।
नित्यशुद्धो नित्यबुद्धो नित्यमुक्तो निरावृतः ॥ १४९ ॥

मैत्र्यादिवासनालभ्यो महाप्रलयसंस्थितः ।
महाकैलासनिलयः प्रज्ञानघनविग्रहः ॥ १५० ॥

श्रीमद्व्याघ्रपुरावासो भुक्तिमुक्तिफलप्रदः ।
जगद्योनिर्जगत्साक्षी जगदीशो जगन्मयः ॥ १५१ ॥

जपो जपपरो जप्यो विद्यासिंहासनप्रभुः ।
तत्त्वानां प्रकृतिस्तत्त्वं तत्त्वंपदनिरूपितः ॥ १५२ ॥

दिक्कालाद्यनवच्छिन्नः सहजानन्दसागरः ।
प्रकृतिः प्राकृतातीतः प्रज्ञानैकरसाकृतिः ॥ १५३ ॥

निःशङ्कमतिदूरस्थः चेत्यचेतनचिन्तकः ।
तारकान्तरसंस्थानस्तारकस्तारकान्तकः ॥ १५४ ॥

ध्यानैकप्रकटो ध्येयो ध्यानं (नी) ध्यानविभूषणः ।
परं व्योम परं धाम परमाणुः परं पदम् ॥ १५५ ॥

पूर्णानन्दः सदानन्दो नादमध्यप्रतिष्ठितः ।
प्रमाविपर्यया(णप्रत्यया)तीतः प्रणताज्ञाननाशकः ॥ १५६ ॥

बाणार्चितांघ्रिर्बहुदो बालकेलिकुतूहलः ।
बृहत्तमो ब्रह्मपदो ब्रह्मविद्ब्रह्मवित्प्रियः ॥ १५७ ॥

भ्रूक्षेपदत्तलक्ष्मीको भ्रूमध्यध्यानलक्षितः ।
यशस्करो रत्नगर्भो महाराज्यसुख प्रदः ॥ १५८ ॥

शब्दब्रह्म शमप्राप्यो लाभकृल्लोकविश्रुतः ।
शास्ता शिखाग्रनिलयः शरण्यो याजकप्रियः ॥ १५९ ॥

संसारवेद्यः सर्वज्ञः सर्वभेषजभेषजम् ।
मनोवाचाभिरग्राह्यः पञ्चकोशविलक्षणः ॥ १६० ॥

अवस्थात्रयनिर्मुक्तस्त्वक्स्थः साक्षी तुरीयकः ।
पञ्चभूतादिदूरस्थः प्रत्यङ्ङेकरसोऽव्ययः ॥ १६१ ॥

षट्चक्रान्तःकृतोल्लासः षड्विकारविवर्जितः ।
विज्ञानघनसंपूर्णो वीणावादनतत्परः ॥ १६२ ॥

नीहाराकारगौरांगो महालावण्यवारिधिः ।
पराभिचारशमनः षडध्वोपरि संस्थितः ॥ १६३ ॥

सुषुम्नामार्ग सञ्चारी बिसतन्तुनिभाकृतिः ।
पिनाकी लिङ्गरूपः श्रीमङ्गलावयवोज्ज्वलः ॥ १६४ ॥

क्षेत्राधिपः सुसंवेद्यः श्रीप्रदो विभवप्रदः ।
सर्ववश्यकरः सर्वतोषकः पुत्रपौत्रदः ।
आत्मनाथस्तीर्थनाथः सप्त(सि)नाथः सदाशिवः ॥ १६५

*—*—*

# दक्षिणामूर्तिसहस्रनामावलिः

ओं आदिदेवाय नमः । दयासिन्धवे । अखिलागमदेशिकाय । दक्षिणामूर्तये । अतुलाय । शिक्षितासुरविक्रमाय । कैलासशिखरोल्लासिने । कमनीयनिजाकृतये । वीरासनसमासीनाय । वीणापुस्तलसत्कराय । अक्षमालालसत्पाणये । चिन्मुद्रितकरांबुजाय । अपस्मारोपरिन्यस्तसव्यपादसरोरुहाय । चारुचामीकराकार जटालार्पितचन्द्रमसे । अर्धचन्द्राभनिटिलपाटीरतिलकोज्ज्वलाय । करुणालहरी पूर्णकर्णान्तायतलोचनाय । कर्णदिव्योल्लसद्दिव्यमणिकुण्डलमण्डिताय । वरवज्रशिलादर्शपरिभवि कपोलभुवे । चारुचांपेय पुष्पाभनासिकापुटरञ्जिताय । दन्तालिकुसुमोत्कृष्टकोमलाधरपल्लवाय नमः ॥ २० ॥

ओं मुग्धस्मितपरीपाक प्रकाशितरदाङ्कुराय नमः । अनाकलितसादृश्यचिबुकश्रीविराजिताय । अनर्घरत्नग्रैवेय विलसत्कंबुकन्धराय । माणिक्यकंकणोल्लासिकरांबुजविराजिताय । मुक्ताहारलसत्तुङ्ग विपुलोरस्कराजिताय । आवर्तनाभिरोमालिवलित्रययुतोदराय । विशंकटकटिन्यस्तवाचालमणिमेखलाय । करिहस्तोपमेयोरवे । आदर्शोज्ज्वलजानुकाय । कन्दर्पतूणीजिज्जंघाय । गुल्फोदञ्चितनूपुराय । मणिमञ्जीरकिरण किञ्जल्कितपदांबुजाय । शाणोल्लीढमणिश्रेणीरम्यांघ्रिनखमण्डलाय । आपादकर्णकामुक्तभूषाशतमनोहराय । सनकादिमहायोगि समाराधितपादुकाय । यक्षकिन्नरगन्धर्व स्तूयमानात्मवैभवाय । ब्रह्मादिदेवविनुताय । योगमाया नियोजकाय । शिवयोगिने । शिवानन्दाय नमः ॥ ४० ॥

ओं शिवभक्तिसमुत्तराय नमः । वेदान्तसारसन्दोहाय । सर्वसत्त्वावलंबनाय । वटमूलाश्रयाय । वाग्मिने । मान्याय ।

मलयजप्रियाय । सुखदाय । वाञ्छितार्थज्ञाय । प्रसन्नवदनेक्षणाय । कर्मसाक्षिणे । कर्ममा(या)यिने । सर्वकर्मफलप्रदाय । ज्ञानदात्रे । सदाचाराय । सर्वपापविमोचनाय । अनाथनाथाय । भगवते । आश्रितामरपादपाय । वरप्रदाय नमः ॥ ६० ॥

ओं प्रकाशात्मने नमः । सर्वभूतहिते रताय । व्याघ्रचर्मासनासीनाय । आदिकर्त्रे । महेश्वराय । सुविक्रमाय । सर्वगताय । विशिष्टजनवत्सलाय । चिन्ताशोकप्रशमनाय । जगदानन्दकारकाय । रश्मिमते । भुवनेशानाय । देवासुरसुपूजिताय । मृत्युञ्जयाय । व्योमकेशाय । षट्त्रिंशत्तत्वसंग्रहाय । अज्ञातसंभवाय । भिक्षवे । अद्वितीयाय । दिगंबराय नमः ॥ ८० ॥

ओं समस्तदेवतामूर्तये नमः । सोमसूर्याग्निलोचनाय । सर्वसाम्राज्यनिपुणाय । धर्ममार्गप्रवर्तकाय । विश्वाधिकाय । पशुपतये । पशुपाशविमोचकाय । अष्टमूर्तये । दीप्तमूर्तये । नामोच्चारणमुक्तिदाय । सहस्रादित्यसंकाशाय । सदा षोडशवार्षिकाय । दिव्यकेलीसमायुक्ताय । दिव्यमाल्यांबरावृताय । अनर्घरत्नसंपूर्णाय । मल्लिकाकुसुमप्रियाय । तप्तचामीकराकाराय । क्रुद्धदावानलाकृतये । निरञ्जनाय । निर्विकाराय नमः ॥ १०० ॥

ओं निजा(रा)वासाय नमः । निराकृतये । जगद्गुरवे । जगत्कर्त्रे । जगदीशाय । जगत्पतये । कामहन्त्रे । काममूर्तये । कल्याणाय । वृषवाहनाय । गंगाधराय । महादेवाय । दीनबन्धविमोचनाय । धूर्जटये । खण्डपरशवे । सद्गुणाय । गिरिजासखाय । अव्ययाय । भूतसेनेशाय । पापघ्नाय नमः ॥ १२०

ओं पुण्यदायकाय नमः । उपदेष्ट्रे । दृढप्रज्ञाय । रुद्राय । रोगविनाशकाय । नित्यानन्दाय । निराधाराय । हराय ।

देवशिखामणये । प्रणतार्तिहराय । सोमाय । सान्द्रानन्दाय । महामतये। आश्चर्य(ऐश्वर्य)वैभवाय। देवाय। संसारार्णवतारकाय । यज्ञेशाय। राजराजेशाय। भस्मरुद्राक्षलाञ्छनाय। अनन्ताय नमः ॥ १४० ॥

ओं तारकाय नमः । स्थाणवे । सर्वविद्येश्वराय । हरये । विश्वरूपाय । विरूपाक्षाय। प्रभवे। परिबृढाय। दृढाय। भव्याय । जितारिषड्वर्गाय । महोदाराय । अघनाशनाय । सुकीर्तये । आदिपुरुषाय । जरामरणवर्जिताय । प्रमाणभूताय । दुर्ज्ञेयाय । पुण्याय। परपुरञ्जयाय नमः ॥ १६० ॥

ओं गुणाकराय नमः । गुणश्रेष्ठाय। सच्चिदानन्दविग्रहाय। सुखदाय । कारणाय । कर्त्रे । भवबन्धविमोचकाय । अनिर्विण्णाय । गुणग्राहिणे। निष्कलंकाय। कलंकघ्ने। पुरुषाय। शाश्वताय। योगिने। व्यक्ताव्यक्ताय। सनातनाय। चराचरात्मने। विश्वात्मने। विश्वकर्मणे। तमोपहृते नमः ॥ १८० ॥

ओं भुजंगभूषणाय नमः। भर्गाय। तरुणाय। करुणालयाय । अणिमादिगुणोपेताय । लोकवश्यविधायकाय । योगपट्टधराय । मुक्ताय । मुक्तानां परमायै गत्यै । गुरुरूपधराय । श्रीमते । परमानन्दसागराय । सहस्रबाहवे । सर्वेशाय । सहस्रावय-वान्विताय । सहस्रमूर्ध्ने । सर्वात्मने । सहस्राक्षाय । सहस्रपदे । निर्विकल्पाय नमः ॥ २०० ॥

ओं निराभासाय नमः । शान्ताय । सूक्ष्माय । परात्पराय । सर्वात्मकाय। सर्वसाक्षिणे। निस्संगाय। निरुपद्रवाय। निर्लेपाय। सकलाध्यक्षाय। चिन्मयाय। तमसःपराय। ज्ञानवैराग्यसंपन्नाय। योगानन्दमयाय । शिवाय । शाश्वतैश्वर्यसंपूर्णाय । महायोगी-श्वरेश्वराय। सहस्रशक्तिसंयुक्ताय। पुण्यकायाय। दुरासदाय नमः ॥ २२० ॥

ओं तारकब्रह्मणे नमः । संपूर्णाय । तपस्विजनसंवृताय । विधीन्द्रामरसंपूज्याय । ज्योतिषां ज्योतिषे । उत्तमाय । निरक्षराय । निरालंबाय । स्वात्मारामाय । विकर्तनाय । निरवद्याय । निरातङ्काय । भीमाय । भीमपराक्रमाय । वीरभद्राय । पुरारातये । जलन्धरशिरोहराय । अन्धकासुरसंहर्त्रे । भगनेत्रभिदे । अद्भुताय नमः ॥ २४० ॥

ओं विश्वग्रासाय नमः । अधर्मशात्रवे । ब्रह्मानन्दैक-(ब्रह्मज्ञानैक)मन्दिराय । अग्रेसराय । तीर्थभूताय । सितभस्माव-गुण्ठनाय । अकुण्ठमेधसे । श्रीकण्ठाय । वैकुण्ठपरमप्रियाय । ललाटोज्ज्वलनेत्राब्जाय । तुषारकरशेखराय । गजासुरशिरश्छेत्रे । गंगोद्भासितमूर्धजाय । कल्याणाचलकोदण्डाय । कमलापति-सायकाय । वारांशेवधितूणीराय । सरोजासनसारथये । त्रयीतुरङ्ग संक्रान्ताय । वासुकिज्याविराजिताय । रवीन्दुचरणाचारिधरारथ विराजिताय नमः ॥ २६० ॥

ओं त्रय्यन्तप्रग्रहोदाराय नमः । उडुकण्ठारवोज्ज्वलाय । उ(औ)त्तानभल्लवामाढ्याय । लीलाविजितदानवाय । जातुप्र-पञ्चजनित जीवनोपायनोत्सुकाय । संसारार्णव संमग्नसमुद्धरण-पण्डिताय । मत्तद्विरदधिक्कारिगतिवैभवमञ्जुलाय । मत्तकोकिल-माधुर्यरसनिर्भरनिस्वनाय । कैवल्योदितकल्लोललीलाताण्डव-पण्डिताय । विष्णवे । जिष्णवे । वासुदेवाय । प्रभविष्णवे । पुरातनाय । वर्धिष्णवे । वरदाय । वैद्याय । हरये । नारायणाय । अच्युताय नमः ॥ २८० ॥

ओं अज्ञानवनदावाग्नये नमः । प्रज्ञाप्रासादभूपतये । सर्वभूषितसर्वाङ्गाय । कर्पूरोज्ज्वलिताकृतये । अनादिमध्यनिधनाय । गिरिशाय । गिरिजापतये । वीतरागाय । विनीतात्मने । तपस्विने ।

भूतभावनाय । देवासुर गुरवे । ध्येयाय (देवाय) । देवासुरनमस्कृताय । देवादिदेवाय । देवर्षये । देवासुरवरप्रदाय । सर्वदेवमयाय । अचिन्त्याय । देवतात्मने नमः ।। ३०० ।।

ओं आत्मसंभवाय नमः । निर्लेपाय । निष्प्रपञ्चात्मने । निर्व्यग्राय । विघ्ननाशनाय । एकज्योतिषे । निरानन्दाय । व्याप्तमूर्तये । अनाकुलाय । निरवद्याय । बहू(वधो)पायाय । विद्याराशये । अकृत्रिमाय । नित्यानन्दाय ।सुराध्यक्षाय । निःसंकल्पाय । निरञ्जनाय । निरातङ्काय । निराकाराय । निष्प्रपञ्चाय नमः ।। ३२० ।।

ओं निरामयाय नमः । विद्याधराय । वियत्केशाय । मार्कण्डयौवनाय । प्रभुवे । भैरवाय । भैरवीनाथाय । कामदाय । कमलासनाय । वेदवेद्याय । सुरानन्दाय । लसज्ज्योतिषे । प्रभाकराय । चूडामणये । सुराधीशाय । यक्षगेयाय । हरिप्रियाय । निर्लेपाय । नीतिमते । सूत्रिणे नमः ।। ३४० ।।

ओं श्रीहालाहलसुन्दराय नमः । धर्मरक्षाय । महाराजाय । किरीटिने । वन्दिताय । गुहाय । माधवाय । यामिनीनाथाय । शंबराय । शंबरीप्रियाय । संगीतवेत्त्रे । लोकज्ञाय । शान्ताय । कलशसंभवाय । ब्रह्मण्याय । वरदाय । नित्याय । शूलिने । गुरुपराय । हराय नमः ।। ३६० ।।

ओं मार्ताण्डाय नमः । पुण्डरीकाक्षाय । कर्मज्ञाय । लोकनायकाय । त्रिविक्रमाय । मुकुन्दार्च्याय । वैद्यनाथाय । पुरन्दराय । भाषाविहीनाय । भाषाज्ञाय । विघ्नेशाय । विघ्न-नाशनाय । किन्नरेशाय । बृहद्भानवे । श्रीनिवासाय । कपालभृते । विजयिने । भूतवाहाय । भीमसेनाय । दिवाकराय नमः ।। ३८० ।।

ओं बिल्वप्रियाय नमः। वसिष्ठेशाय। सर्वमार्गप्रवर्तकाय। ओषधीशाय। वामदेवाय। गोविन्दाय। नीललोहिताय। षडर्धनयनाय। श्रीमते। महादेवाय। वृषध्वजाय। कर्पूरवीटिकालोलाय। कर्पूरवरचर्चिताय। अव्याजकरुणामूर्तये। त्यागराजाय। क्षपाकराय। आश्चर्यविग्रहाय। सूक्ष्माय। सिद्धेशाय। स्वर्णभैरवाय नमः ॥ ४०० ॥

ओं देवराजाय नमः। कृपासिन्धवे। अद्वयाय। अमितविक्रमाय। निर्भेदाय। नित्यसत्वस्थाय। निर्योगक्षेमाय। आत्मवते। निरपायाय। निरासंगाय। निःशब्दाय। निरुपाधिकाय। अजाय। सर्वेश्वराय। स्वामिने। भवभीतिविभञ्जनाय। दारिद्र्यतृण कूटाग्नये। दारितासुरसन्तत्यै। मुक्तिदाय। मुदिताय नमः ॥ ४२० ॥

ओं कुब्जाय नमः। धार्मिकाय। भक्तवत्सलाय। अभ्यासातिशयज्ञेयाय। चन्द्रमौलये। कलाधराय। महाबलाय। महावीर्याय। विभवे। श्रीशाय। शुभप्रदाय (प्रियाय)। सिद्धाय। पुराणपुरुषाय। रणमण्डलभैरवाय। सद्योजाताय। वटारण्यवासिने। पुरुषवल्लभाय। हरिकेशाय। महात्रात्रे। नीलग्रीवाय नमः ॥ ४४० ॥

ओं सुमङ्गलाय नमः। हिरण्यबाहवे। तिग्मांशवे। कामेशाय। सोमविग्रहाय। सर्वात्मने। सर्वसत्कर्त्रे। ताण्डवाय। मुण्डमालिकाय। अग्रगण्याय। सुगंभीराय। देशिकाय। वैदिकोत्तमाय। प्रसन्नदेवाय। वागीशाय। चिन्तातिमिरभास्कराय। गौरीपतये। तुङ्गमौलये। मधुराजाय। महाकवये नमः ॥ ४६० ॥

ओं श्रीधराय नमः । सर्वसिद्धेशाय । विश्वनाथाय । दयानिधये । अन्तर्मुखाय । बहिर्दृष्टये । सिद्धवेषाय । मनोहराय । कृत्तिवाससे । कृपासिन्धवे । मन्त्रसिद्धाय । मतिप्रदाय । महोत्कृष्टाय । पुण्यकराय । जगत्साक्षिणे । सदाशिवाय । महाक्रतवे । महायज्वने । विश्वकर्मणे । तपोनिधये नमः ॥ ४८० ।

ओं छन्दोमयाय नमः । महाज्ञानिने । सर्वज्ञाय । देववन्दिताय । सार्वभौमाय । सदानन्दाय । करुणामृतवारिधये । कालकालाय । कलिध्वंसिने । जरामरणनाशकाय । शितिकण्ठाय । चिदानन्दाय । योगिनीगणसेविताय । चण्डीशाय । सुखसंवेद्याय । पुण्यश्लोकाय । दिवस्पतये । स्थायिने । सकलतत्त्वात्मने । सदा सेवकवर्धकाय नमः ॥ ५०० ॥

ओं रोहिताश्वाय नमः । क्षमारूपिणे । तप्तचामीकरप्रभाय । त्रियंबकाय । वररुचये । देवदेवाय । चतुर्भुजाय । विश्वंभराय । विचित्रांगाय । विधात्रे । पुरनाश(शास)नाय । सुब्रह्मण्याय । जगत्स्वामिने । लोहिताक्षाय । शिवोत्तमाय । नक्षत्रमाल्याभरणाय । भगवते । तमसः पराय । विधिकर्त्रे । विधानज्ञाय नमः ॥ ५२० ॥

ओं प्रधानपुरुषेश्वराय नमः । चिन्तामणये । सुरगुरवे । ध्येयाय । नीराजनप्रियाय । गोविन्दाय । राजराजेशाय । बहुपुष्पार्चनप्रियाय । सर्वानन्दाय । दयारूपिणे । शैलजासुमनोहराय । सुविक्रमाय । सर्वगताय । हेतुसाधनवर्जिताय । वृषाङ्काय । रमणीयाङ्गाय । सत्कर्त्रे । सामपारगाय । चिन्ताशोकप्रशमनाय । सर्वविद्याविशारदाय नमः ॥ ५४० ॥

ओं भक्तविज्ञप्तिसन्धात्रे नमः । वक्त्रे । गिरिवराकृतये । ज्ञानप्रदाय । मनोवासाय । क्षेम्याय । मोहविनाशनाय ।

सुरोत्तमाय । चित्रभानवे । सदा वैभवतत्पराय । सुहृदग्रेसराय । सिद्धाय । ज्ञानमुद्राय । गणाधिपाय । अमराय । चर्मवसनाय । वाञ्छितार्थफलप्रदाय । असमानाय । अन्तरहिताय । देवसिंहासनाधिपाय नमः ॥ ५६० ॥

ओं विवादहन्त्रे नमः । सर्वात्मने । कालाय । कालविवर्जिताय । विश्वातीताय । विश्वकर्त्रे । विश्वेशाय । विश्वकारणाय । योगिध्येयाय । योगनिष्ठाय । योगात्मने । योगवित्तमाय । ओंकाररूपाय । भगवते । बिन्दुनादात्मकाय । शिवाय । चतुर्मुखादिसंस्तुत्याय । चतुर्वर्गफलप्रदाय । सह्याचलगुहावासिने । साक्षान्मोक्षरसाकृतये नमः ॥ ५८० ॥

ओं दक्षाध्वरसमुच्छेत्रे नमः । पक्षपातविवर्जिताय । ओंकारवाचकाय । शंभवे । शंकराय । शशिशीतलाय । पंकजासनसंसेव्याय । किंकरामरवत्सलाय । नतदौर्भाग्यतूलाग्नये । कृतकौतुकविभ्रमाय । त्रिलोकमोहनाय । श्रीमते । त्रिपुण्ड्रांकितमस्तकाय । क्रौञ्चारिजनकाय । श्रीमद्गणनाथसुतान्विताय । अद्भुताय । अनन्तवरदाय । अपरिच्छेद्यात्मवैभवाय । इष्टापूर्तप्रियाय । शर्वाय नमः ॥ ६०० ॥

ओं एकवीरप्रियंवदाय नमः । ऊहापोहविनिर्मुक्ताय । ओंकारेश्वरपूजिताय । कलानिधये । कीर्तिनाथाय । कामेशीहृदयङ्गमाय । कामेश्वराय । कामरूपाय । गणनाथसहोदराय । गाढाय । गगनगंभीराय । गोपालाय । गोचराय । गुरवे । गणेशाय । गायकाय । गोप्त्रे । गाणापत्यगणप्रियाय । घण्डानिनादरुचिराय । कर्णलज्जाविभञ्जनाय नमः ॥ ६२० ॥

ओं केशवाय नमः । केवलाय । कान्ताय । चक्रपाणये । चराचराय । घनाघनाय । घोषयुक्ताय । चण्डीहृदयनन्दनाय ।

चित्रार्पिताय। चित्रमयाय । चिन्तितार्थप्रदायकाय। छद्मचारिणे । छद्मगतये। चिदाभासाय। चिदात्मकाय। छन्दोमयाय। छत्रपतये । छन्दः शास्त्रविशारदाय। जीवनाय। जीवनाधाराय नमः ।। ६४०।।

ओं ज्योतिःशास्त्रविशारदाय नमः । ज्योतिषे । ज्योत्स्नामयाय । जेत्रे । जीमूतवरदायकाय । जनाघनाशनाय । जीवाय । जीवदाय । जीवनौषधाय । जराहराय । जाड्यहराय । ज्योत्स्नाजालप्रवर्तकाय । ज्ञानेश्वराय । ज्ञानगम्याय । ज्ञानमार्ग-परायणाय । तरुस्थाय । तरुमध्यस्थाय । डामरीशक्तिरञ्जकाय । तारकाय । तारतम्यात्मने नमः ।। ६६० ।।

ओं टीपाय नमः । तर्पणकारकाय । तुषाराचलमध्यस्थाय । तुषारकरभूषणाय । त्रिसुगन्धाय । त्रिमूर्तये । त्रिमुखाय । त्रिककुद्धराय । त्रिलोकीमुद्रिकायूषाय । त्रिकालज्ञाय । त्रयीमयाय । तत्वरूपाय । तरुस्थायिने । तन्त्रीवादनतत्पराय । अद्भुतानन्त-संग्रामाय । ढक्कावादन तत्पराय(कौतुकाय) । तुष्टाय । तुष्टिमयाय । स्तोत्रपाठकाय । अतिप्रियस्तवाय । (स्तोत्रपाठकातिप्रियस्तवाय) नमः ।। ६८० ।।

ओं तीर्थप्रियाय नमः । तीर्थरताय । तीर्थाटनपरायणाय । तैलदीपप्रियाय । तैलपकान्नप्रीतमानसाय । तैलाभिषेकसन्तुष्टाय । तिलचर्वणतत्पराय । दीनार्तिहृते । दीनबन्धवे । दीननाथाय । दयापराय । दनुजारये । दुःखहन्त्रे । दुष्टभूतनिषूदनाय । दीनोरुदायकाय । दान्ताय । दीप्तिमते । दिव्यलोचनाय । देदीप्यमानाय । दुर्ज्ञेयाय नमः ।। ७०० ।।

ओं दीनसंमानतोषिताय नमः । दक्षिणाप्रेमसन्तुष्टाय । दारिद्र्यबडवानलाय । धर्माय । धर्मप्रदाय । ध्येयाय । धीमते । धैर्यविभूषिताय ।नानारूपधराय। नम्राय। नदीपुलिनसंश्रिताय ।

नटप्रियाय । नाट्यकराय । नारीमानसमोहनाय । नारदाय । नामरहिताय । नानामन्त्ररहस्यविदे । पत्यै । पातित्यसंहर्त्रे । परविद्याविकर्षकाय नमः ॥ ७२० ॥

ओं पुराणपुरुषाय नमः । पुण्याय । पद्यगद्यप्रदायकाय । पार्वतीरमणाय । पूर्णाय । पुराणागमसूचकाय । पशूपहाररसिकाय । पुत्रदाय । पुत्रपूजिताय । ब्रह्माण्डभेदनाय । ब्रह्मज्ञानिने । ब्राह्मणपालकाय । भूताध्यक्षाय । भूतपतये । भूतभीति-निवारणाय । भद्राकाराय । भीमगर्भाय । भीमसंग्रामलोलुपाय । भस्मभूषाय । भस्मसंस्थाय नमः ॥ ७४० ॥

ओं भैक्ष्यकर्मपरायणाय नमः । भानुभूषाय । भानरूपाय । भवानीप्रीतिदायकाय । भवप्रियाय । भावरताय । भावाभावविवर्जिताय । भ्राजिष्णवे । जीवसन्तुष्टाय । (भ्राजिष्णुजीवसन्तुष्टाय) भट्टाराय । भद्रवाहनाय । भद्रदाय । भ्रान्तिरहिताय । भीमचण्डी-पतये । महते । यजुर्वेदप्रियाय । याजिने । यमसंयमसंयुताय । रामपूज्याय । रामनाथाय नमः ॥ ७६० ॥

ओं रत्नदाय नमः । रत्नहारकाय । राज्यदाय । रामवरदाय । रञ्जकाय । रतिमार्गधृते । रामानन्दमयाय । रम्याय । राजराजे-श्वराय । रसाय । रत्नमन्दिरमध्यस्थाय । रत्नपूजापरायणाय । रत्नाकराय । लक्षणेशाय । लक्ष्यदाय । लक्ष्यलक्षणाय । लोलाक्षीनायकाय । लोभिने । लक्षमन्त्रजपप्रियाय । लंबिकामार्गनिरताय नमः ॥ ७८० ॥

ओं लक्षकोटचण्डनायकाय नमः । विद्याप्रदाय । वीतिहोत्रे । वीरविद्याविकर्षकाय । वाराहीपालकाय । वन्याय । वनवासिने । वनप्रियाय । वनेचराय । वनचराय । शक्तिपूज्याय । शिखिप्रियाय । शरच्चन्द्रनिभाय । शान्ताय । शक्ताय । संशयवर्जिताय । शापानुग्रहदाय । शंखप्रियाय । शत्रुनिषूदनाय । षट्कृत्तिकासु-संपूज्याय नमः ॥ ८०० ॥

ओं षट्शास्त्रार्थरहस्यविदे नमः । सुभगाय । सर्वजिते । सौम्याय । सिद्धमार्गप्रवर्तकाय । सहजानन्ददाय । सोमाय । सर्वशास्त्ररहस्यविदे । सर्वजिते । सर्वविदे । साधवे । सर्वधर्मसमन्विताय । सर्वाध्यक्षाय । सर्वदेवाय । महर्षये । मोहनास्त्रविदे । क्षेमंकराय । क्षेत्रपालाय । क्षयरोगक्षयङ्कराय । निस्सीममहिम्ने नमः ॥ ८२० ॥

ओं नित्याय नमः । लीलाविग्रहरूपधृते । चन्दनद्रव-दिग्धांगाय । चांपेयकुसुमप्रियाय । समस्तभक्तसुखदाय । परमाणवे । महाह्रदाय । आकाशगाय । दुष्प्रधर्षाय । कपिलाय । कालकन्धराय । कर्पूरगौराय । कुशलाय । सत्यसन्धाय । जितेन्द्रियाय । शाश्वतैश्वर्यविभवाय । पुष्कराय । सुसमाहिताय । महर्षये । पण्डिताय नमः ॥ ८४० ॥

ओं ब्रह्मयोनये नमः । सर्वोत्तमोत्तमाय । भूमिभारार्तिसंहर्त्रे । षडूर्मिरहिताय । मृडाय । त्रिविष्टपेश्वराय । सर्वहृदयांबुजमध्यगाय । सहस्रदलपद्मस्थाय । सर्ववर्णोपशोभिताय । पुण्यमूर्तये । पुण्यलभ्याय । पुण्यश्रवणकीर्तनाय । सूर्यमण्डलमध्यस्थाय । चन्द्रमण्डमध्यगाय । सद्भक्तध्याननिगलाय । शरणागतपालकाय । श्वेतातपत्ररुचिराय । श्वेतचामरवीजिताय । सर्वावयवसंपूर्णाय । सर्वलक्षणलक्षिताय नमः ॥ ८६० ॥

ओं सर्वमङ्गलमांगल्याय नमः । सर्वकारणकारणाय । आमोदमोदजनकाय । सर्पराजोत्तरीयकाय । कपालिने । गोविन्दसिद्धाय । कान्तिसंवलिताननाय । सर्वसद्गुरुसंसेव्याय । दिव्यचन्दनचर्चिताय । विलासिनीकृतोल्लासाय । इच्छाशक्ति-निषेविताय । अनन्ताय । अनन्तसुखदाय । नन्दनाय । श्रीनिके-तनाय । अमृताब्धिकृतावासाय (तोल्लासिने) । नित्यक्लिन्नाय । निरामयाय । अनपायाय । अनन्तदृष्टये नमः ॥ ८८० ॥

ओं अप्रमेयाय नमः । अजराय । अमराय । अनामयाय । अप्रतिहताय । अप्रतर्क्याय । अमृताय । अक्षराय । अमोघसिद्धये । आधाराय । आधाराधेयवर्जिताय । ईषणात्रयनिर्मुक्ताय । ईहामात्रविवर्जिताय । ऋग्यजुःसामनयनाय । ऋद्धिसिद्धिसमृद्धिदाय । औदार्यनिधये । आपूर्णाय । ऐहिकामुष्मिकप्रदाय । शुद्धसन्मात्रसंवित्तास्वरूपसु(मु)खविग्रहाय । दर्शनप्रथमाभासाय नमः ॥ ९०० ॥

ओं दुष्टदर्शनवर्जिताय नमः । अग्रगण्याय । अचिन्त्यरूपाय । कलिकल्मषनाशनाय । विमर्शरूपाय । विमलाय । नित्यतृप्ताय । निराश्रयाय । नित्यशुद्धाय । नित्यबुद्धाय । नित्यमुक्ताय । निरावृताय । मैत्र्यादिवासनालभ्याय । महाप्रलयसंस्थिताय । महाकैलासनिलयाय । प्रज्ञानघनविग्रहाय । श्रीमद्व्याघ्रपुरावासाय । भुक्तिमुक्तिफलप्रदाय । जगद्योनये । जगत्साक्षिणे नमः ॥ ९२० ॥

ओं जगदीशाय नमः । जगन्मयाय । जपाय । जपपराय । जप्याय । विद्यासिंहासनप्रभवे । तत्त्वानां प्रकृतये । तत्त्वाय । तत्त्वंपदनिरूपिताय । दिक्कालाद्यनवच्छिन्नाय । सहजानन्दसागराय । प्रकृत्यै । प्राकृतातीताय । प्रज्ञानैकरसाकृतये । निःशङ्कमतिदूरस्थाय । चेत्यचेतन चिन्तकाय । तारकान्तरसंस्थानाय । तारकाय । तारकान्तकाय । ध्यानैकप्रकटाय नमः ॥ ९४० ॥

ओं ध्येयाय नमः । ध्यानाय (ध्यानिने) । ध्यानविभूषणाय । परस्मै व्योम्ने । परस्मैधाम्ने । परमाणवे । परस्मैपदाय । पूर्णानन्दाय । सदानन्दाय । नादमध्यप्रतिष्ठिताय । प्रमाविपर्यया(णप्रत्यया)-तीताय । प्रणताज्ञाननाशकाय । बाणार्चितांघ्रियुगलाय ।

बालकेलिकुतूहलाय । बृहत्तमाय । ब्रह्मपदाय । ब्रह्मविदे । ब्रह्मवित्प्रियाय। भ्रूक्षेपदत्तलक्ष्मीकाय। भ्रूमध्य ध्यानलक्षिताय नमः ॥ ९६० ॥

ओं यशस्कराय नमः । रत्नगर्भाय। महाराज्य सुखप्रदाय। शब्दब्रह्मणे । शमप्राप्याय। लाभकृते। लोकविश्रुताय । शास्त्रे । शिखाग्रनिलयाय । शरण्याय । याजकप्रियाय । संसारवैद्याय । सर्वज्ञाय। सर्वभेषजभेषजाय। मनोवाचाभिरग्राह्याय। पञ्चकोश-विलक्षणाय । अवस्थात्रयनिर्मुक्ताय । त्वक्स्थाय । साक्षिणे । तुरीयकाय नमः ॥ ९८० ॥

ओं पञ्चभूतादिदूरस्थाय नमः । प्रतीचे । एकरसाय । अव्ययाय । षट्चक्रान्तःकृतोल्लासाय । षड्विकारविवर्जिताय । विज्ञानघनसंपूर्णाय। वीणावादनतत्पराय। नीहाराकारगौराङ्गाय । महालावण्यवारिधये । पराभिचार शमनाय । षडध्वोपरि-संस्थिताय । सुषुम्नामार्गसञ्चारिणे। बिसतन्तुनिभाकृतये। पिनाकिने । लिङ्गरूपाय । श्रीमङ्गलावयवोज्ज्वलाय । क्षेत्राधिपाय । सुसंवेद्याय। श्रीप्रदाय नमः ॥ १००० ॥

ओं विभवप्रदाय नमः । सर्ववश्यकराय। सर्वतोषकाय। पुत्रपौत्रदाय । आत्मनाथाय। तीर्थनाथाय। सप्त(प्ति)नाथाय। सदाशिवाय नमः ॥ १००८ ॥

# माणिक्यवाचकसहस्रनामावलिः

ओं अद्भुताय नमः । अद्भुतचारित्राय । अनपायाय । अनङ्गरूपवते ।अतिबुद्धये । अतिश्रेष्ठाय । अशेषजन-सौख्यदाय । अमात्यवर्याय । अगधृते । अरिमर्दनपूजिताय । अगजा-करुणापात्राय । अग्निभूसदृशाय । अव्ययाय । अनेकाम्नायवेत्त्रे । अनेकागमवाचकाय । अतिसुन्दरवाचे । अब्जनयनाय । अतिदयान्विताय । अरिजेत्रे । असाध्यबलाय नमः । २०

ओं अवाङ्मानसगोचराय नमः । अप्रमेयबलाय । अनन्तमहिम्ने । अतिमुदान्विताय । अचिन्त्यशक्तये । अक्षोभ्याय । अग्रगण्याय । अजराय । अमराय । अत्युदाराय । अनघाय । अमोघाय । अशोकाय । अनाथवत्सलाय । अपाराय । अनन्तमहिम्ने । अद्वयाय । अनन्तमोक्षदाय । अकल्मषाय । अभिरामाय नमः । ४०

ओं अप्रमेयाय । अध्वराय । अचराय । अग्र्याय । अतुलाय । अमृताय । अघोराय । अधुर्याय । अमितविक्रमाय । अनाथनाथाय । अमलाय । अप्रमत्ताय । अचञ्चलाय । अरिन्दमाय । अखिलाधाराय । अकलङ्काय । अचलिताय । अचपलाय । अभीष्टदायकाय । अदृश्याय । ६०

ओं अमेयात्मने नमः । अतीन्द्रियाय । अव्यक्त-लक्षणाय । आत्मपतये । आत्मनिष्ठाय । आत्मनाथाङ्घ्रिपूजकाय । आर्य-वेदविदे । आत्मवेत्त्रे । आदये । आप्तकामदाय । आगमाम्भोधि-भुवे । आनन्दामृतदायकाय । आचार्यपादभक्ताय । आश्रितामरपादपाय । आबालगोपविदिताय । आसेतुकीर्तिमते ।

आकाश-गमनाय । आकाशसञ्चारपरसौख्यदाय । आत्मपूजा-पराय । आत्ममन्त्रोद्धारप्रवर्तकाय नमः । ८०

ओं आत्मेश्वराप्तमन्त्राय नमः । आशाविरहिताय । आशापालनुताय । आदित्यसमकान्तिमते । आदिकैलास-नगरीनायकाभिमताय । आर्याय । आढ्याय । आनन्दाय । आपद्विनाशकाय । आनन्दात्मफलप्रदाय । आर्तसंरक्षणाय । आश्रितेष्टार्थदायकाय । आपन्नार्तिविनाशकाय । आर्यसंसर्ग-तत्पराय । इन्दिरावासवक्त्रश्रिये । इन्दिरापाङ्गवीक्षिताय । इन्दिरारमणस्निग्धाय । इन्दिरावासपात्रकाय । इन्द्रादिदेवता-पूज्याय । इन्द्रगोपसमांशुकाय नमः । १००

ओं इलाधरसुतापुत्राय । इतिहासपराय । इयत्ता-विच्छिन्नयशसे । इक्षुसारसमानवाचे । इच्छाविरहिताय । इन्द्रविमानप्रवरस्थिताय । इष्टापूर्तफलप्राप्ताय । इष्टेष्टवरदायकाय । इतिहासस्तुतिस्तुत्याय । इहामुत्रफलप्रदाय । इन्द्रोपेन्द्र-समाभोगाय । इष्टदाय । इष्टवत्सलाय । ईशानचरणासक्ताय । ईप्सितार्थप्रदायकाय । ईहाविरहिताय । ईड्याय । ईतिबाधा-विनाशकाय । ईषणात्रयविनिर्मुक्ताय । ईश्वराङ्घ्रिप्रपूजकाय नमः । १२०

ओं ईशताण्डवसेविने नमः । ईशित्वाद्यष्टसिद्धिदाय । ईश्वरोत्सङ्गनिलयाय । ईश्वरध्यानचेतसे । ईशानादिब्रह्मचिन्त्याय । ईशपूजापरायणाय । ईश्वरप्रेरणकराय । ईशाज्ञापरिपालकाय । ईदृगित्यविनिर्देश्याय । ईश्वरारा-धनोत्सुकाय । ईशक्षेत्ररताय । ईशाय । ईश्वरप्रेमभाजे । ईश्वरावासरसिकाय । ईशैश्वर्यसमृद्धिमते । ईतिभीतिहराय । ईडनीयपराक्रमाय । उदारकीर्तये । उत्कृष्टाय । उद्योगिने नमः । १४०

ओं उत्सवप्रियाय नमः । उत्कृष्टशक्तये । उत्साहाय । उज्जृम्भाय । उद्भवाय । उत्कृष्टबुद्धये । उन्मत्ताय । उद्वेगघ्नाय । उरगेश्वराय । उदग्रलोचनाय । उदग्राय । उमाचरणभक्तिमते । उरुप्रभावाय । उरुतराय । उमासूनवे । उदारधिये । ऊर्ध्वरेतसे । ऊर्ध्वगतये । ऊर्ध्वाय । ऊर्ध्वगाय नमः १६०

ओं ऊर्जिताय नमः । ऊर्जवते । ऊर्जितकीर्तये । ऊर्जिताघप्रमर्दनाय । ऊर्जिताज्ञाय । ऊर्जितगतये । ऊर्जितवाचे । ऊर्जितासनाय । ऋजुरूपाय । ऋजुकराय । ऋजुमार्गप्रदर्शकाय । ऋणत्रयविनिर्मुक्ताय । ऋग्यजुर्वेद-पारगाय । ऋतवाचे । ऋतुपर्णश्रिये । ऋचीकप्रियदर्शनाय । ऋद्धाय । ऋद्ध्यात्मकाय । ऋभुक्षापतिसेविताय । लिङ्गार्चनपराय नमः । १८०

ओं लिङ्गपुराणश्रवणोत्सुकाय नमः । एणाजिनधराय । एणाङ्कधरपूजकाय । एनौघनाशनाय । एकवीराय । एकाग्र-चित्ताय । एधमानप्रभावाय । एणाक्षिप्रियभक्तिमते । एकत्र निश्चलमतये । एकभोगाय । एकमानसाय । ऐश्वर्यदायकाय । ऐतिह्याय । ऐन्द्रभोगवते । ऐरावतसमारूढाय । ऐरावत-सुपूजिताय । ओजस्विने । ओषधीपतये । ओङ्कारनिरताय । ओंपदार्थविचारकाय नमः । २००

ओं ओदनप्रियाय नमः । औदार्यशीलाय । औदार्याय । औन्नत्याय । औन्नतिदायकाय । औपकार्यवरिष्ठाय । औपकार-रताय । अम्बरस्थाय । अम्बरतरवे । अम्बरप्रभुसेवकाय । अम्बरारण्यरसिकाय । अंशुमते । अन्नदाय । अम्बराय । अम्बिकातनयाय । अम्बिकारमणप्रियाय । अन्धकार-विनाशनाय । अन्धत्वविनिवर्तकाय । अन्धकारिप्रियाय । अन्तकान्तकभक्तिमते नमः । २२०

ओं अम्बुजातमुखाय नमः । अम्बुजावाससुन्दराय । आस्थानमण्डपकराय । आस्थानस्थप्रपूजकाय । आस्थानस्थान-रसिकाय । आस्थानावाससौख्यदाय । कल्याणशीलाय । काव्यज्ञाय । कन्दर्पसमकान्तिमते । कनकाङ्गदकेयूरधराय । कनकाम्बरधारकाय । कारुण्यामृतवर्षिणे । करुणारसशेवध्यै । कलिदोषनिवृत्ताय । कमनीयाय । कलान्विताय । कलानाथाय । कल्पवल्ली-समभुजाय । कवाटकठिनोरस्काय । करेणुमन्द-गमनाय नमः । २४०

ओं करेणुसमविक्रमाय । कटीतटलसत्सूत्राय । कौपीन-वरधारकाय । करस्थपुस्तकधराय । करस्थाक्षस्रगुज्ज्वलाय । कम्बुकण्ठाय । कलालापाय । कर्मठाय । कंजलोचनाय । करभोरवे । कामहराय । कामतूणीरजङ्घिकाय । कमलत्विट्-पदाय । कान्ताय । कामशासन सेवकाय । कालज्ञाय । कांक्षारहिताय । कारणज्ञाय । कृपानिधये । कामप्रदाय नमः । २६०

ओं कान्तियुक्ताय नमः । काञ्चनाभाय । कवीश्वराय । कान्तिमते । क्लेशनाशाय । कलुषघ्नाय । कलाधराय । क्रूरघ्नाय । कवचिने । कोमलाङ्गाय । कृतिने । कृशाय । कल्याय । कृतज्ञाय । कलितापहृते । कामरूपाय । कल्पतरवे । करुणाकराय । ख्यातिप्रदाय । खेचरेशाय नमः । २८०

ओं ख्याताय नमः । खेचरसंश्रयाय । खस्थप्रियाय । खण्डिताघाय । खस्थाय । खेचरपालकाय । खण्डेन्दुमौलि-भक्ताय । खरतापहराय । खेलाय । खेटधराय । खड्गाङ्गिने । खलनिग्रहाय । खण्डितैनसे । खण्डिताशाय । खण्डिताय ।

खण्डपातकाय । खरान्तकहिताय । खेचरीजनपूजिताय । गम्भीराय। गगनानन्दाय नमः । ३००

ओं गुप्ताय नमः । गुह्याय । गुणाश्रयाय । गुणातीताय । गुणनिधये । गूढरूपाय । गुणाग्रण्यै । गोप्त्रे । गुणज्ञाय । गीतज्ञाय । गुणवते । गुणवर्धनाय । गुहावासाय । गतातङ्काय । गद्यपद्यप्रियाय । गताविद्याय । गतक्लेशाय । गण्याय । गगनगोचराय । गाङ्गेयसमबुद्धिमते नमः ।। ३२०

ओं गणनीयचरित्राय नमः । गन्धर्वसेव्याय । गन्धर्वाय । गोपालसचिवोत्तमाय । गोप्रियाय । गोनुतयशसे । गिरिशाप्त-मनवे । गुणिने । गोपूज्याय । गिरि-जासूनवे । गोधराय । गगनस्थिताय । गाङ्गेयशोभिततनवे । गीतवादित्रकौशलाय । घनानन्दाय । घृणाम्भोधये । घनवते । घनपतये । घनविक्रमाय । घनगम्भीरघोषाय नमः । ३४०

ओं घोरासुरविनाशकाय नमः । घनर्द्धये । घननादाय । घटितैश्वर्यवते । घृष्टिमते । घोषितानाम्नायाय । घटिताशेष-राज्यवते । चण्डाय । चामीकरप्रख्याय । चण्डाज्ञाय । चिन्मयाय । चिन्मुद्राधारकाय । चिज्ज्ञाय । चिदम्बरनिवासकाय । चित्रवेषाय । चित्ररथाय । चिदाज्ञापरिपूजकाय । चिदेकरसाय । चिद्रूपाय । चित्रभानुसमद्युतये नमः । ३६०

ओं चीर्णव्रताय नमः । चीर्णतपसे । चिन्तितार्थप्रदायकाय । चमत्कृते । चिन्तनीयाय । चोरघ्नाय । चतुराय । चन्द्रशेखरसूनवे । चामीकरविभूषणाय । चारवे । चन्द्रार्कसदृशाय । चित्रचेलाय । चिरन्तनाय । छन्दोमयाय । छद्महन्त्रे । छिन्नपाशाय । छविच्छदाय । छत्रीकृतमहाकीर्तये । छेदिताखिलपातकाय । छाडीकृतमहाक्लेशाय नमः । ३८०

ओं छान्दसज्योतिर्दर्शकाय नमः । छान्दसैकरताय । छान्दसाराधनप्रियाय । छन्दस्साराय । छिन्नपाशात्मने । छन्दोगाय । छिन्नसंशयाय । छादितानङ्गवृत्तये । छेदिताखिल-संशयाय । जम्भारिमित्राय । जयदाय । जगत्पूज्याय । जगद्धिताय । जगज्ज्येष्ठाय । जितामित्राय । जेत्रे । ज्योतिर्मयाय । जयाय । जितेन्द्रियाय । जगन्नाथाय नमः ॥ ४०० ॥

ओं जगज्जीवाय नमः । जनाश्रयाय । जगद्वन्द्याय । जितक्लेशाय । जगत्कीर्तये । जगत्प्रियाय । जगदानन्द-जनकाय । जनाज्ञानापहारकाय । जितमायाय । जितक्रोधाय । जिता-सङ्गाय । जनप्रियाय । जयन्ताय । जन्तुतापघ्नाय । जन्मकर्म-निवर्तकाय ।जनेश्वराय । जगद्भव्याय । जन्मादिवर्जिताय । जगदाह्लादजनकाय । जगद्गुरवे नमः । ४२०

ओं जयत्सेनाय नमः । जपरताय । जपमालाधराय । जपिने । झंझानिलमहावेगाय । झल्लरीवाद्यसुप्रियाय । झङ्कारी-कृतवेदाय । झटिताशेषपातकाय । ज्ञानज्ञेयाय । ज्ञानगम्याय । ज्ञानमूर्तये । ज्ञानाम्भोधये । ज्ञाननिधये । ज्ञानिने । ज्ञेयस्व-रूपवते । ज्ञानशास्त्रप्रवक्त्रे । ज्ञानशास्त्रविशारदाय । ज्ञापकाय । ज्ञापिताम्नायाय । ज्ञानदीप्ताय नमः । ४४०

ओं टीकाकृतत्रयीघोषाय नमः । टीकावाचे । टङ्किताखिलाय । टङ्कारनृत्यविभवाय । टङ्कावज्रध्वजाङ्किताय । टङ्कितैनस्तमोरवये । डाडिमीसुमचेलाय । डाडिमीबीजदन्तवते । डमड्डमरुकाय । ढक्कावाद्यप्रियकराय । ढक्किताामरपूजकाय । ढक्कानादोन्-मुखाय । तत्वज्ञानिने । तपोरूपाय । त्रिगुणात्म-काय । तत्पदाय । तत्वगाय । तीव्राय । त्रिकालज्ञाय । त्रयीमयाय नमः । ४६०

ओं तुष्टिदाय नमः । तीक्ष्णाय । त्रिदशेशाय । तपोरूपाय । त्रिमूर्तिमते । स्तवाय । स्तोत्रे । स्तवप्रीताय । त्रिकालविदे । तत्पदज्ञाय । त्वम्पदज्ञाय । त्रयीतनवे । तत्वमस्यादिवाक्यज्ञाय । ताराधिपमुखाय । स्थिताय । स्थायिने । स्थापकाय । स्थूलसूक्ष्मप्रदर्शकाय । स्थैर्यदाय । स्थानदाय नमः । ४८०

ओं स्थूलाय नमः । स्थिरप्रज्ञाय । स्थिरपूज्याय । स्थिरकीर्तये । स्थविष्ठाय । स्थापितेश्वराय । दात्रे । दयानिधये। दान्ताय । दुरितघ्नाय । दुरासदाय । दर्शनीयाय । देवपूज्याय । दीर्घबाहवे । दृढव्रताय । दुराधर्षाय । दुर्विगाह्याय । दक्षाय । दर्पणशोभिताय । दुर्धराय नमः । ५००

ओं दानशीलाय नमः । दीनसन्तापनाशनाय । दीप्याय । दिव्याकृतये । देवाय । दीर्घदृष्टये । दिवस्पतये । दमाय । दण्डाय । दमयित्रे । दर्पदाय । दुर्लभाय । दुष्प्रेक्ष्याय । दुर्गमाय । दीप्ताय । दिव्यमण्डनाय । दुःखघ्नाय । दुरितघ्नाय । दुर्जयाय । दुरतिक्रमाय नमः । ५२०

ओं देवर्षये नमः । देवपूज्याय । देवज्ञाय । दैवचिन्तकाय । दुर्ज्ञेयाय । दुष्टदूराय । देवसिंहाय । दिनेश्वराय । दान्ताय । दयापराय । दुरारिघ्ने । दिशाम्पतये । दण्डनीतये । दण्डकामाय । दहराकाश-पूजिताय । धर्मेशाय । धर्मशास्त्रज्ञाय । धृतिमते । धूतकल्मषाय । धुरन्धराय नमः । ५४०

ओं धर्मपराय नमः । धनदाय । धृतिवर्धनाय । धनाध्यक्षाय । धनपतये । धन्विने । धर्मपरायणाय । । धर्मकृते । धर्मशूराय । धर्महेतवे । धर्मव्रताय । धात्रे । धीमते । धर्मचारिणे । धन्याय । धुर्याय । नित्याय । नित्यपतये । नन्द्याय । नित्यतृप्ताय नमः । ५६०

ओं निरञ्जनाय नमः । नित्योत्सवाय । निश्चलात्मने । निर्लेपाय । निरहङ्कृतये । निरवद्याय । निष्कलङ्काय । निर्मोहाय । निरुपद्रवाय । नित्यानन्दाय । निरातङ्काय । निर्ममाय । निरामयाय । निरीहाय । निर्मलाय । निष्प्रत्यूहाय । निरालम्बाय । निस्सङ्गाय । निगमस्तुताय । नैकरूपाय नमः । ५८०

ओं निराकाराय नमः । निधये । नेत्रे । निराश्रयाय । निजोद्भवाय । निर्विकल्पाय । नियतपूजकाय । नादान्तदृशे । नादनुताय । नारदेड्याय । नृवाहनाय । नरसिंहाय । नृपामात्याय । नवात्मने । नादभक्तिमते । पवित्राय । परमोदाराय । पराय । परमपूरुषाय । परब्रह्मविचारज्ञाय नमः । ६००

ओं परमाय नमः । पावनाकृतये । प्रत्यक्षमूर्तये । परेशाय । परमप्रियाय । पितृभक्ताय । पीतवर्णाय । पुण्याय । पुण्यविवर्धनाय । पुण्यरूपाय । पुण्यकराय । पुण्यकृते । पापनाशनाय । परस्मैज्योतिषे । प्रसन्नात्मने । प्रणतार्तिहराय । प्रभवे । पूतात्मने । परमात्मने । परमात्मेशभक्तिमते नमः । ६२०

ओं परार्थाय नमः । परमस्पष्टाय । पटवे । परिबृढाय । पूर्णाय । पुरुषाय । प्रभवाय । पुरुषोत्तमाय । परस्मै ब्रह्मणे । पवित्राय । पुष्टिमते । पुष्टिवर्धनाय । पापहारिणे । पाशमुक्ताय । पूर्णानन्दाय । पुष्कलाय । परात्पराय । पावनाय । पूज्याय । पूज्यजनावृताय नमः । ६४०

ओं प्रवराय नमः । पवमानज्ञाय । प्रकाशात्मने । प्रतापवते । परब्रह्मस्वरूपाय । प्रज्ञावते । पाण्ड्यराट्प्रियाय । प्रकृष्टार्थाय । प्रशान्ताय । पृथवे । पृथुपराक्रमाय ।

पवित्रमाणिक्यपतये । परमैश्वर्यकारणाय । परमभागवताय । पार्थिवात्मप्रपूजकाय । पुरन्दरनुताय । पुरुहूतसमद्युतये । पावकाभाय । पातकभिदे । पातकाद्रिपवये नमः । ६६०

ओं परस्मै नमः । प्रार्थितात्मविनोदाय । पतङ्गार्चिषे । परेश्वराय । परमस्वामिशिष्याय । परब्रह्मैकभावनाय । फणिराड्धरभक्ताय । फणामणिविभूषणाय । फलदाय । फलहस्ताय । फुल्लाम्बुजविलोचनाय । बलवते । बहुमित्राय । बभ्रवे । बुधप्रियाय । बहुश्रुताय । बहुमताय । ब्रह्मण्याय । ब्राह्मणप्रियाय । ब्रह्मचारिणे नमः ।। ६८०

ओं बालरूपाय नमः । ब्रह्मविष्ण्वीशसेवकाय । बहुरूपाय । बृहद्धानवे । बोधाय । ब्रह्मणे । बहुप्रदाय । बहुभाग्याय । बलश्रीमते । बालार्करोचिष्मते । बृहच्चक्षुषे । बृहद्देहाय । बृहद्भावाय । बुधार्चिताय । बन्धमुक्ताय । बन्धशून्याय । ब्रह्मबन्धाय । बिलेशयाय । ब्रह्माराध्याय । ब्रह्मवेद्याय नमः । ७००

ओं ब्रह्मविदे नमः । ब्रह्मनिष्ठाय । भवभक्ताय । भक्तिगम्याय । भव्याय । भाग्यवर्धनाय । भ्राजिष्णवे । भगवते । भोगिने । भुक्तिमुक्तिप्रदायकाय । भावनाय । भावनागम्याय । भवनाशाय । भवप्रियाय । भाव्याय । भोगीश्वराय । भर्त्रे । भीमाय । भीमपराक्रमाय । भूतिकृते नमः । ७२०

ओं भूतिदाय नमः । भोक्त्रे । भावुकाय । भुवनेश्वराय । भवतापप्रशमनाय । भीकराय । भूतभावनाय । भ्रान्तिनाशाय । भावुकेष्टाय । भानुमते । भुवनाश्रयाय । भोज्यप्रदाय । भूरिभोगप्रदाय । भद्राय । भिषगीश्वराय । भजनीयाय । भद्रमूर्तये । भक्तभक्ताय । भयापहाय । भरतज्ञाय नमः । ७४०

ओं भारतीशाय नमः । भूपमन्त्रिणे । भौतिकाय । महाबुद्धये। महावीर्याय । महोत्साहाय । महाबलाय । महाभोगाय। महाशक्तये । महामायिने । महाद्युतये । मुनिस्तुताय। महामात्याय। मेधाविने। मेखलिने। महते। महानन्दाय। माननिधये। महापुण्याय। महोदयाय नमः। ७६०

ओं मानदाय नमः । मुदिताय । मानिने । महाबलपराक्रमाय। महोत्तमाय । महामुख्याय । महार्थिने । मूर्तिमते । मुक्तिमते । मुनये । मुक्तिदात्रे । महाभागाय । मोक्षदाय । मङ्गलप्रदाय । मुक्तामालादिभूषाढ्याय । मुनिमानसहंसकाय । मौनिने । मङ्गलवाचे । मालिने । महेशाराधनोत्सुकाय नमः। ७८०

ओं माणिक्यवाचकाय। मनोदूराय। महोन्नताय। यमिने । यशस्कराय। योगिने। योगनिष्ठाय। यतिव्रताय। योगयुक्ताय। योगनिधये। योगविदे। योगसिद्धये। यातनारहिताय। यन्त्रिणे। यन्त्राय ।यन्त्रज्ञाय । योगीश्वराय । योग्याय । यमिसेव्याय । यथेष्टदाय नमः ॥ ८०० ॥

ओं यमाद्यष्टाङ्गनिरताय नमः । यजुर्वेदमनुप्रियाय । यशस्विने। यज्ञनिरताय। यतिरूपाय। यतेन्द्रियाय। रमणीयाय। रम्यरूपाय ।रसज्ञाय । रसभावुकाय । रञ्जनाय । रंजिताय । रम्याय । रागद्वेषविनाशनाय । रणप्रियाय । रतोदाराय । रक्तार्चिषे। रुचिराय। रुचये। रूपलावण्यसौन्दर्याय नमः। ८२०

ओं रक्तमाल्यानुशोभिताय नमः । रजस्तमो-गुणातीताय । रजनीशमुखोज्ज्वलाय । राजीवाक्षाय । राजराजाय । रोगनाशनाय । रक्ताङ्गदधराय । रक्तकुण्डल-

मण्डिताय । रणमण्डलमण्डिताय । । रणन्मञ्जीरपादाढ्याय । रुचिकृते । रुचिरेक्षणाय । लोकैकनाथाय । लोकेशाय । ललिताय । लोकनायकाय । लोकरक्षकाय । लोकशिक्षकाय । लोकलोचन-रंजिताय । लोकबन्धवे नमः । ८४०

लोचनत्रयमण्डिताय नमः । लावण्याब्धये । लैङ्गवेत्रे । लिङ्गाराधनतत्पराय । वश्याय । वरिष्ठाय । वरदाय । विभवे । वन्द्याय । विरोचनाय । विद्याधराय । विचित्राङ्गाय । विगतातङ्काय । विशोकाय । विद्वत्तमाय । वेद्याय । विभवे । विदुषे । विशाम्पतये । वीतरागाय नमः । ८६०

ओं विधेयात्मने नमः । विश्वदृशे । विमलाय । वराय । वाचालकाय । वाग्विशदाय । वातुलागमपारगाय । वाङ्मनोतीतविभवाय । वटवे । वाचामगोचराय । वाचकप्रभवाय । वाग्मिने । वनसञ्चारवते । विशुद्धात्मने । वेदविदे । विबुधप्रियाय । विज्ञानिने । व्यापकाय । वातग्रामाधिपाय । वेदगर्भाय नमः । ८८०

ओं वीतभयाय नमः । वसवे । विश्वदीप्तये । विशालाक्षाय । विजितात्मने । विभावनाय । वेद्यलक्ष्याय । विद्यात्मने । विभवात्मने । वीतदोषाय । वसुप्रदाय । विश्वमूर्तये । विश्वकर्मणे । विश्वरूपाय । वीरासनाय । वीरचूडामणये । वेत्त्रे । विद्येशाय । विबुधाश्रयाय । विनयिने नमः ९००

ओं विजयिने नमः । वरीयसे । विरजाय । विधये । वेगवते । वीर्यवते । वशिने । वरगुणाय । विशोकाय । वरशीलाय । वन्दारुजनवत्सलाय । शरजन्मसमाय । श्रीमते । शङ्करप्रियाय शूराय । शुद्धाय । शुचये । शिष्टाय । शुद्धात्मने । शोकनाशनाय नमः । ९२०

ओ शमादिषट्कसम्पन्नाय नमः । शीलवते । शोभनाकृतये । षट्चक्रज्ञाय । षडूर्मिज्ञाय । षडङ्गश्रुतिपारगाय । षडरिघ्नाय । षडाधाराय । षड्वर्गिणे । षट्क्रमाय । सिद्धार्थाय । सिद्धसङ्कल्पाय । सिद्धाय । साधवे । सुरेश्वराय । स्वयंज्योतिषे । सुप्रसन्नाय । सुमुखाय । सुखदाय । सुहृदे नमः । ९४०

ओं संभाव्याय नमः । सौमनस्याय । सकलागम-पारगाय । सर्वलक्षणसम्पन्नाय । सत्वधर्मपरायणाय । सच्चिदानन्दद्रष्ट्रे । सदामृष्टान्नदायकाय । सर्ववेदनिधये । सत्याय । सर्वविघ्न-विनाशकृते । सुकुमाराय । सुनासाय । सुमुखाय । सुलोचनाय । स्वर्णवर्णाय । सुक्रमाय । सुग्रीवाय । सदाशुचये । सर्वदर्शिने । सर्ववेद्याय नमः । ९६०

ओं सर्वायुधविशारदाय । सदाशिवसमाराध्याय । सर्वमङ्गल-दायकाय । समाय । समविभक्ताङ्गाय । समलोष्टाश्मकाञ्चनाय । संसारसङ्गनिर्मुक्ताय । सदाब्रह्मैकभावनाय । सद्विवेकाय । साध्यनिष्ठाय । साधुसङ्गाय । समात्मवते । हस्तलग्नशुकाय । हृताघाय । हतकिल्बिषाय । हविषे । हिरण्यवर्णाय । हितकृते । हेमभूषणाय । हतपापाय नमः ।। ९८० ।।

ओं हतारये नमः । हर्षदाय । हसिताननाय । हस्तिवाहाय । हर्म्यवासाय । हतद्वैताय । हतार्तिमते । हानिवृद्धिनिवृत्ताय । हरभक्ताय । हुताग्निमते । क्षेत्रज्ञाय । क्षेत्रपालकाय । क्षेत्रवासाय । क्षमाकराय । क्षेत्रपाय । क्षान्तिदाय । क्षेम्याय । क्षालिताघाय । क्षमाक्षमाय । क्षीणसंरक्षणाय । क्षितीशसचिवोत्तमाय । माणिक्यवाचक-स्वामिने नमः । १००२

*—*—*

# श्री माणिक्यवाचकाष्टोत्तरशतनामावलिः

* * *

ओं दिव्यज्ञानस्वरूपाय नमः । तेजसे । ज्ञानदेहाय । ज्ञानगुरवे । परब्रह्मणे । परमेष्ठिने । परात्पराय । भूतिप्रियाय । वेदोक्ताय । गुरवे । शङ्करभक्ताय । समस्तविद्याय । आत्मतत्वाय । आत्मभुवे । विरागाय । कृच्छ्रदेहाय । जटाधराय । मूलाधाराय । वीरासनाय । चिन्मुद्रसव्यहस्ताय नमः । २०

ओं विद्यातत्वाय नमः । षडाधाररूपाय । सव्यहस्तजपमालाय । काषायवस्त्रधारणाय । मनस्तत्वस्वरूपाय । मन्मथनिग्रहाय । चक्षुस्तत्वस्वरूपाय । शिवभक्ताय । वामकरपुस्तकाय । आनन्दाय । अद्भुतगुरवे । अश्वप्रियाय । सूक्ष्मदेहाय । त्वक्तत्वाय । हरितप्रियाय । महोत्तमाय । पृथ्वीतत्वाय । निर्मलाय । कौपीनधारणाय । क्रियारूपाय नमः । ४०

ओं जिह्वातत्वाय नमः । रुद्राक्षधारणाय । सुखासनाय । महद्भूताय । वेदपारायणप्रियाय । पञ्चेन्द्रियनिग्रहाय । गन्धप्रियाय । घ्राणतत्वाय । ज्ञानदाय । देवराजाय । शिवतत्वाय । पाण्ड्यप्रियाय । परमात्मने । योगाय । प्राणाय । योग्याय । निष्ठारूपाय । निराकाराय । सुदेहाय । त्रिगुणात्मकाय नमः । ६०

ओं योगासनाय नमः । मन्त्रताराय । अपानाय । अनैश्वर्याय । पञ्चाक्षरप्रियाय । ऋषिप्रियाय । अहङ्काराय । व्यानाय । मृडरूपधृते । चण्डभक्ताय । तपस्विने । स्थिरासनाय । उदानाय । जन्मवर्जिताय । चित्कलाय । नैकप्रियाय । समानाय । चतुर्वेदप्रियाय । व्याघ्रचर्मासनस्थिताय । सत्याय नमः । ८०

ओं अज्ञाननिग्रहाय नमः । तपोमयाय । तन्त्ररूपाय । अद्वयवाणये । वाक्यवक्त्राय । वह्निरूपाय । द्विनेत्राय । स्थानज्ञाय । सुप्रकाशाय । सुन्दरप्रियाय । व्याकुञ्चितपादाय । श्यामाय । रथप्रियाय । भूतात्मने । अमृताय । फलप्रदाय । नखराय । स्पर्शतत्वाय । ऋषिस्थिताय । प्राणापानस्थिताय नमः । १००

ओं शास्त्रप्रियाय नमः । शिवपरायणाय । पृथिवीपुरवासिने । रागद्वेषविनाशनाय । कर्पूरदीपसंस्थिताय । करुणाकटाक्षप्रियाय । सप्ततत्वस्वरूपाय । वातपुरीश्वरस्वामिने नमः । १०८

*—*—*

# माणिक्यवाचकाष्टोत्तरशतनामस्तोत्रम्

अक्षस्रक्पुस्तकोद्भासिहस्तं माणिक्यवाचकम् ।
काश्यपं समयाचार्यं दाक्षिणात्यं उपास्महे ।। १

ओं । मार्ताण्डतेजा माणिक्यवाचको माननिर्भरः ।
महेन्द्रवरदो मन्त्री मायाविरहितात्मवान् ।। २

मारबाधाविनिर्मुक्तो मारतूणीरजङ्घिकः ।
मारुताशफणाभूषो महेश्वरजनेश्वरः ।। ३

मातृकान्यासनिरतो मातृपादाब्जपूजकः ।
मायापायविनिर्मुक्तो मानदो मार्गदर्शकः ।। ४

मारवैरिकृपापात्रायमानोत्तमवाग्झरः ।
मायावादविनिर्जेता महातीर्थकृतादरः ।। ५

निरन्तरो नित्यतपा नित्यतृप्तो निधीश्वरः ।
निष्कलङ्को निरीहश्च नियतो निरहंकृतिः ।। ६

निमित्तज्ञो निराधारो निर्ममो नित्यरञ्जनः ।
नित्योत्साहो निरातङ्को नियतिज्ञो नियामकः ।। ७

नियन्ता निगमार्थाब्धिवर्धनोत्थनिशापतिः ।
कर्मण्यः करुणापूर्णः कारणज्ञः कवीश्वरः ॥ ८

कालज्ञः कुलकृत्कल्यः कलानाथमुखोज्ज्वलः ।
कम्बुकण्ठः कलाज्ञानः कैवल्यपदबोधकः ॥ ९

करपद्मधृताक्षस्रक्पुस्तकः कनकाम्बरः ।
कटीतटीलसत्सूत्रः कौपीनवरधारकः ॥ १०

कीर्तिमान्कामारिभक्तः कामपाशविवर्जितः ।
वातग्रामाधिपो वाग्मी वातूलागमपारगः ॥ ११

वाग्व्याहारेशवचनो वाचस्पति समानधीः ।
वाराणसीवासरतो वाङ्माधुर्यजितामृतः ॥ १२

वातापितापनसखो वायुरोगविवर्जितः ।
वाचालको वाहिनीशो वाच्यवाचकसुन्दरः ॥ १३

वाङ्मनोतीतविभवो वासुदेवपदप्रियः ।
वाराहीमन्त्रराड्जप्ता वामदेवस्तुतिप्रियः ॥ १४

वामाङ्गसुन्दरतनुर्वाण्याराधनतत्परः ।
चतुरश्चण्डवीर्यश्च चण्डाज्ञश्चन्द्रशीतलः ॥ १५

चण्डांशुसदृशज्योतिश्चतुर्वेदाब्धिपारगः ।
चाञ्चल्यभिच्चमत्कारी चातुर्वर्ण्यानुपालकः ॥ १६

चन्द्रशेखरभक्तश्च चन्द्रार्काग्निसमप्रभः ।
चराचरजगन्मित्रं चिन्मूर्तिश्चञ्चलाद्युतिः ॥ १७

चतुर्वक्त्रमुखोत्पन्नश्चरणाश्रितभूपतिः ।
चन्द्रचूडनिभौजाश्च चण्डेश्वरसमानधीः ॥ १८

कञ्जदृक्कल्याणशीलः काषाय वसनोज्ज्वलः ।
कवाटकठिनोरस्कः कन्दर्पसमकान्तिमान् ॥ १९

कार्पासयज्ञोपवीती कलिदोषनिकृन्तनः ।
करीन्द्रमन्दगमनः करुणारसशेवधिः ॥ २०

कलुषघ्नः कलालापः कवची काश्यपस्तथा ।
कनकाङ्गदधारी च कर्मग्रन्थिविमोचकः ॥ २१

कमलद्विट्पदद्वन्द्वः कमनीयः कुलेश्वरः ।
अष्टोत्तरमिदं नाम्नां शतं वातपुरीशितुः ॥ २२

त्रिसन्ध्यं यः पठेन्नित्यं वातरोगाद्विमुच्यते ।
योगाम्बिकासनाथस्य कृपापात्रं भवेच्च सः ॥ २३

——*——

# माणिक्यवाचकाष्टोत्तरशतनामावलिः

ओं । (मा) मार्ताण्डतेजसे नमः । माणिक्यवाचकाय । माननिर्भराय । महेन्द्रवरदाय । मन्त्रिणे । मायाविरहितात्मवते । मारबाधाविनिर्मुक्ताय । मारतूणीरजङ्घिकाय । मारुताशफणाभूषाय । महेश्वरजनेश्वराय । मातृकान्यासनिरताय । मातृपादाब्जपूजकाय । मायापायविनिर्मुक्ताय । मानदाय । मार्गदर्शकाय । मारवैरिकृपापात्रायमानोत्तम वाग्झराय । मायावादनिविर्जेत्रे । महातीर्थकृतादराय नमः । १८

(णि-नि) निरन्तराय नमः । नित्यतपसे । नित्यतृप्ताय । निधीश्वराय । निष्कलङ्काय । निरीहाय । नियताय । निरहंकृतये । निमित्तज्ञाय । निराधाराय । निर्ममाय । नित्यरञ्जनाय । नित्योत्सवाय । निरातङ्काय । नियतिज्ञाय । नियामकाय । नियन्त्रे । निगमार्थाब्धिवर्धनोत्थ निशापतये नमः । ३६

(क) कर्मण्याय नमः । करुणापूर्णाय । कारणज्ञाय । कवीश्वराय । कालज्ञाय । कुलकृते । कल्याय । कलानाथमुखो-

ज्ज्वलाय । कम्बुकण्ठाय । कलाज्ञानाय । कैवल्यपदबोधकाय । कराब्जपुस्तकधराय । करस्थाक्षस्रगुज्ज्वलाय । कटीतटील-सत्सूत्राय । कौपीनवरधारकाय । कामारिभक्ताय । कीर्त्यायि । कामपाशविवर्जिताय नमः । ५४

(वा) वातग्रामाधिपाय नमः । वाग्मिने । वातूलागम-पारगाय । वाय्वाहारेशवचनाय । वाचस्पतिसमानधिये । वाराणसीवासरताय । वाङ्माधुर्यजितामृताय । वातापितापन सखाय । वायुरोगविवर्जकाय । वाचालकाय । वाहिनीशाय । वाच्यवाचकसुन्दराय । वाङ्मनोऽतीत विभवाय । वासुदेव-पदप्रियाय । वाराहीमन्त्रराड्जप्त्रे । वामदेवस्तुतिप्रियाय । वामाङ्गसुन्दरतनवे । वाण्याराधनतत्पराय नमः । ७२

(च) । चतुराय नमः । चण्डवीर्याय । चण्डाज्ञाय । चन्द्रशीतलाय । चण्डांशुसदृशज्योतिषे । चतुर्वेदाब्धिपारगाय । चाञ्चल्यभिदे । चमत्कारिणे । चातुर्वर्ण्यानुपालकाय । चन्द्रशेखरभक्ताय । चन्द्रार्काग्निसमप्रभाय । चराचरजगन्मित्राय । चिन्मूर्तये । चञ्चलाद्युतये । चतुर्वक्त्र मुखोत्पन्नाय । चरणाश्रितभूपतये । चन्द्रचूडनिभौजसे । चण्डेश्वरसमानाधिये नमः । ९०

(क) । कञ्जदृशे नमः । कल्याणशीलाय । काषायवसनोज्ज्वलाय । कवाटकठिनोरस्काय । कन्दर्पसम-कान्तिमते । कार्पासयज्ञोपवीतिने । कलिदोषनिकृन्तनाय । करीन्द्रमन्दगमनाय । करुणारसशेवधये । कलुषघ्नाय । कला-लापाय । कवचिने । काश्यपाय । कनकाङ्गदधारिणे । कर्मग्रन्थि-विमोचकाय । कमलद्विट्पदद्वन्द्वाय । कमनीयाय । कुलेश्वराय नमः । १०८

——*——

# वीरभद्रध्यानम्

मरकतमणिनीलं किङ्किणीयुक्तपादं
प्रकटीतमुखमीशं भानुसोमाग्निनेत्रम्।
हरितरमणिखेटं त्र्यक्षमालाग्रहस्तं
विधुतरमहिभूषं वीरभद्रं नमामि ॥

# वीरभद्रसप्तविंशति नामावलिः

ओं। वीरभद्रेश्वराय नमः। वीरनाथाय। वीरप्रभावकाय। उग्राय। रथवहाय। त्रिणेत्राय। त्रैलोक्यवासकाय। देवदेवाय। देवरक्षित्रे। योगभद्राय। पार्वतीप्रियपुत्राय। पंकजप्रियाय। रौद्ररूपाय। भक्तरक्षकाय। शरभाय। शङ्खचक्रधराय। धनुर्भृते। खड्गहस्ताय। सर्वेश्वराय। सर्पाभरणाय। रक्तकेशाय। यागहन्त्रे। वीणानादाय। सिंहासनाय। नन्दिगणाय। नारसिंहसंहाराय। वीरभद्राय नमः। (२७)

# वीरभद्राष्टोत्तरशतनामावलिः।

ओं। अघोरभद्राय नमः। अतिक्रूराय। रुद्रकोपसमुद्भवाय। सर्पराजनिवीताय। ज्वलन्नेत्राय। प्रमीताभरणाय। त्रिशूलायुधधारणाय। शत्रुप्रतापनिधनाय। शशिशेखराय। हरिकेशाय। जटाधारिणे। दक्षयज्ञविनाशनाय। ऊर्जस्वलाय। नीलशिखिने। नटाकाराय। निजज्वालोज्ज्वलाय। धन्विने। ज्येष्ठाय। मखघ्नाय। अरिदर्पघ्नाय नमः॥ २०

ओं आत्मयोनये नमः। कालभक्ष्याय। गम्भीराय। कलङ्करहिताय। जल्पिने। शरभाय। कालकण्ठाय। भूतरूपधृते।

परोक्षवरदाय। कलिसंहारकृते । अति(आदि)भीमाय। गणपतये। भोगाय। योग्याय। खड्गधारिणे। खेटधारिणे । विजयिने। जयप्रदाय । भीमरूपाय। नीलकण्ठाय नमः। ४०

ओं निरामयाय नमः । भुजङ्गभूषणाय । गहनाय । दामभूषणाय । प्राणदाय । टङ्कहस्ताय। शरचापधराय। मृगासनाय । महावश्याय। महासत्याय। महाक्षमाय । शालाय। मोहाय। जृम्भहारिणे । दिविवासिने । रुद्ररूपाय । सारज्ञाय । दुःस्वप्ननाशनाय । वज्रदंष्ट्राय। वक्रदन्ताय नमः। ६०

ओं सुकान्ताय नमः। जयन्धराय। कलानिधये। सौम्याय। भूतभावनाय । धनदात्रे। (अ)सुरकुलनाशनाय। मारघ्ने। कैलासवासिने । क्षेमक्षेत्राय। बिन्दूत्तमाय । हरदत्तकपालाय। बृहल्लोचनाय। भस्मधृते। पार्वतीप्रियपुत्राय। वीराय। विषहराय। ईशानपुत्राय। भस्मोद्धूलिने। कारणमूर्तिमते नमः। ८०

ओं महते भूताय नमः। महाडम्भाय। रुद्राय। उन्मत्ताय। त्रेताचाराय। हुङ्काराय। अचिन्त्याय। परब्रह्मणे। किङ्किणीधृते। घातुकाय । वीणापञ्चमनिस्वनाय । नीलवेणये। श्यामनिभाय। चण्डाय। मार्ताण्डाय । कुञ्चिताङ्घ्रये। कृत(घृत)मुखाय । कुतुकाय । अट्टहासाय । बृहत्सेनावृताय नमः। १००

ओं रक्तवर्णधराय नमः। किरीटिने। उग्राय। सिंहहन्त्रे। अङ्गदधृते । अनाथाय । शत्रुमथनाय। श्री वीरभद्रेश्वराय नमः। १०८

# प्रणवविधानम्

(भगवान् आत्मनाथो भगवती योगनायिका च गुरुस्वरूपौ, प्रणवस्वरूपौ, दक्षिणामूर्तिस्वरूपौ च श्रीमाणिक्यवाचक-भाग्यपरिपाकेन जनैः कृतां सपर्यां स्वीकुरुतः। तयोः स्वरूपं इदमीदृक् इति नावगन्तुं पार्यते। दक्षिणामूर्तिरिव तथा आत्मानं दर्शयामासेति वृद्धाः। बाह्यपूजायां लब्धावकाशा एता नामावल्यः । ध्यानयोगेन प्रणवात्मना परात्मना भावनं योगिमात्रसुकरम् । स ध्यानयोगश्च क्रोडपत्रोपलब्धः इह प्रकाश्यते । गुरुवृद्धसंपदायानुसार्येष गुरुमुखा देवावगन्तव्यः। पत्रलब्धं न नष्टं भवेदिति धिया अत्र संगृह्यते।

## प्रणवजपभावनाक्रमः

अस्य श्रीप्रणवमहामन्त्रस्य, प्रजापतिः ऋषिः । देवीगायत्री छन्दः । परमात्मा देवता। अं बीजं, उं शक्तिः। अं ओं आं हृदयाय नमः । इं ओं ईं शिरसे स्वाहा। उं ओं ऊं शिखायै वषट्। एं ओं ऐं कवचाय हुं। ओं ओं औं नेत्रत्रयाय वौषट्। अं ओं अः अस्त्राय फट् । (अथवा) ओं भूः हृदयाय नमः। ओं भुवः शिरसे स्वाहा। ओं सुवः शिखायै वषट्। ओं महः कवचाय हुं। ओं जनः नेत्रत्रयाय वौषट्। ओं तपः अस्त्राय फट्।

१. अं ओं नमः ब्रह्माणं भावयामि। (नाभौ)

उं ओं नमः विष्णुं भावयामि। (हृदये)

मं ओं नमः रुद्रं भावयामि। (भ्रूमध्ये)।

ओं ओं नमः ईश्वरं भावयामि। (मूर्धनि)।

२. पृथक् पृथक् एषां लमित्यादिमानसपूजा। तेजोरूपान् विभाव्य, प्रणवोच्चारणेन तानेकीकृत्य षोडशान्तस्थामृतेन योजयेत्। पुनरेवं अं नमः इति प्रणवप्रणवावयवेन ब्रह्माणं चतुर्षु स्थानेषु

पूर्ववत्संपूज्य प्रणवेन तेजोरूपं कृत्वा अमृतेन योजयेत्। एवं उं नमः, मं नमः इति द्वाभ्यां विष्णुरुद्रौ तथैवामृतेन योजयेत्।

३. पुनः एवमेव प्रणवावयवैः त्रिभिरपि ब्रह्मविष्णु रुद्रान् नाभेर्दक्षिणतो वामतो नाभौ च, हृदयस्य दक्षिणतो वामतो मध्ये च भ्रूमध्यस्य दक्षिणतो वामतो मध्यतश्च यथायोगं भावयित्वा संपूज्य तेजोरूपान् षोडशान्तामृतेन योजयेत्। पुनः प्रणवेन एवमेव चतुर्षु स्थानेषु भावयित्वा संपूज्य तेजोरूपं ईश्वरं अमृतेन योजयेत्।

४. मातृकास्थानेषु न्यासस्त्वेवम्—

अं अं नमः - शिरसि

उं आं नमः - मुखवृत्ते

मं इं नमः - दक्षनेत्रे

अं ईं नमः - वामनेत्रे

उं उं नमः - दक्षकर्णे

मं ऊं नमः - वामकर्णे

अं ऋं नमः दक्षनासायां

उं ॠं नमः - वामनासायां

मं ऌं नमः - दक्षकपोले

अं ॡं नमः - वामकपोले

उं एं नमः - ऊर्ध्वोष्ठे

मं ऐं नमः - अधरोष्ठे

अं ओं नमः - ऊर्ध्वदन्तेषु

उं औं नमः - अधोदन्तेषु

मं अं नमः - जिह्वाग्रे

अं अः नमः - कण्ठे

उं कं नमः - दक्षबाहुमूले

मं खं नमः - दक्षकूर्परे

अं गं नमः - दक्षमणिबन्धे

उं घं नमः - दक्षकराङ्गुलिमूले

मं ङं नमः - दक्षकराङ्गुल्यग्रे

अं चं नमः - वामबाहुमूले

उं छं नमः - वामकूर्परे

मं जं नमः - वाममणिवन्धे

अं झं नमः - वामकरांगुलिमूले

उं ञं नमः - वामकरांगुल्यग्रे

मं टं नमः - दक्षोरुमूले

अं ठं नमः - दक्षजानुनि

उं डं नमः - दक्षगुल्फे

मं ढं नमः - दक्षपादां गुलिमूले

अं णं नमः - दक्षपादांगुल्यग्रे

उं तं नमः - वामोरुमूले

मं थं नमः - वामजानुनि

अं दं नमः - वामगुल्फे

उं धं नमः - वामपादांगुलिमूले

मं नं नमः - वामपादांगुल्यग्रे

अं पं नमः - दक्षपार्श्वे

उं फं नमः - वामपृष्ठे

मं बं नमः - वामपार्श्वे

अं भं नमः - नाभौ

उं मं नमः - जठरे

मं यं नमः - हृदये

अं रं नमः - दक्षकक्षे

उं लं नमः - गलपृष्ठे

मं वं नमः - वामकक्षे

अं शं नमः - हृदयादि दक्षकराङ्गुल्यन्तम्

उं षं नमः - हृदयादिवामकराङ्गुल्यन्तम्

मं सं नमः - हृदयादि दक्षपादाङ्गुल्यन्तम्

अं हं नमः - हृदयादि वामपादाङ्गुल्यन्तम्

उं ळं नमः - कट्यादि दक्षिणपादाङ्गुल्यन्तम्

मं क्षं नमः - कट्यादिवामपादाङ्गुल्यन्तम्

५. पुनः ओं अं ओं नमः । ओं आं ओं नमः इत्येवं प्रणवपुटितवर्णान् मातृकास्थानेषु न्यसेत् ।

६. पुनः ओं अं ब्रह्मणे नमः । ओं आं विष्णवे । इं रुद्राय । ईं ओङ्काराय । उं प्रणवाय । ऊं सर्वव्यापिने । ऋं अनन्ताय । ॠं ताराय । लृं सूक्ष्माय । लॄं शुक्लाय । एं वैद्युताय । ऐं पराय । ओं ब्रह्मणे । औं एकाय । अं एकरुद्राय । अः ईशानाय । कं भगवते । खं महेश्वराय । गं महादेवाय । घं सदाशिवाय । ङं सर्वरक्षित्रे । चं सर्वगताय । छं सर्वप्रियतमाय । जं

नित्यतृप्ताय । झं सर्वापगमाय ।ञं सर्वकान्ताय । टं सर्वप्रतिष्ठाय। ठं सर्वश्रोत्रे। डं सर्वस्वामिने। ढं सर्वसमृद्धाय । णं सर्वचक्राय। तं सर्वक्रियाय। थं सर्वेच्छाय। दं सर्वदीप्ताय । धं सर्वावाप्ताय । नं सर्वालिङ्गिताय । पं सर्वहिंसकाय । फं सर्वदाहकाय। बं सर्वभावाय। भं सर्ववृद्धाय। मं गुणबीजाय । यं स्रुवाय। रं वेदादये। लं आदये। वं मध्यमाय। शं पराय। षं त्रिमात्राय। सं योनये। हं सर्वदेहाश्रयाय। ळं संवादकाय । क्षं सर्वात्मने। इति प्रणवादीन् नमोऽन्तान्मातृकाक्षरस्थानेषु न्यसेत्।

ध्यानक्रमः—

षट्कुक्षिं पीठसंस्थं तदुपरि विलसत्सोमसूत्रं सबिन्दुं
तन्मध्ये नादसंज्ञं प्रणवमभिवृतं बिन्दुनादौ पुनश्च।
इत्थं संचिन्त्य योगी विविधमनुदिनं तारगं व्योमसंस्थं
सर्वाधारं महेशं सकृदपि मनसा संस्मरेद्यः स मुक्तः ॥

* * *

## षडाधारेषु आत्मनाथध्यानम्

मूलाधारे कन्दस्य दक्षिणे भागे - ईशाय ओं ह्रीं श्रीं गं नमः शिवाय इति, वामभागे ऐं ह्रीं श्रीं सौं ओं ह्रीं नमः शिवायै इति 27-36-108 वारं जप्त्वा,

दशशतदलपद्मे संस्थमानन्दकन्दं
विधिहरिगिरिशैक्यं विद्युदुद्भासमानम्।
प्रणवमयमतर्क्यं सूक्ष्मसूक्ष्मं महान्तं
शिवपुरनिलयं तं चिन्तयाम्यात्मनाथम्॥

इति ध्यायेत्।

स्वाधिष्ठाने - ह्सक्षमलवरयूं इति शिवं सह्क्षमलवरयीं इति शिवां च जप्त्वा दशशतदलपद्मे इति श्लोकेन ध्यायेत्।

मणिपूरके - ओं शिव शिव शरणं शिवानन्दं शिव शिव शिवाय नमः इति ध्वनिमन्त्रं प्रथमं शतवारं चतुःशतवारं चतुः सहस्रवारं वा जपन् शिवं तद्वामे शिवां च ध्यायन्—

ओं भूः। ओं भुवः। ओं सुवः। ओं महः। ओं जनः। ओं तपः। ओं सत्यम्। ओं ह्रीं श्रीं तत्सवितुर्वरेण्यं क ए ई ल ह्रीं भर्गो देवस्य धीमहि हसकहलह्रीं धियो यो नः प्रचोदयात् सकलह्रीं परो रजसि सावदों क ए ई ल हसकहल सौः ऐं क्लीं ह्रीं श्रीं ओमापो ज्योतीरसोऽमृतं ब्रह्म भूर्भुवस्सुवरों इति, अथवा।

ओं भूः ओं भुवः ओं सुवः ओं महः ओं जनः ओं तपः ओं सत्यं श्रीं सौः क्लीं ऐं ह्रीं ओं सौः श्रीं तत्सवितुर्वरेण्यं क एईलह्रीं भर्गो देवस्य धीमहि हसकहलह्रीं धियो यो नः प्रचोदयात् सकलह्रीं परोरजसि सावदों श्रीं सौः क्लीं ऐं ह्रीं ओं सौः श्रीं स्वाहा इति जपन् दशशतदलपद्मे इति श्लोकेन ईशं भावयेत्।

अनाहते - ओं ह्रीं परं ज्योतिः हंस हंस व्योम व्योम्ना शक्तिशिवस्वरूप ज्योतिरानन्द नृत्तप्रकाशानन्दनाथरक्त पादुकां पूजयामि ह्रीं शिवायै नमः ह्रीं इति जपन् दशशतदलपद्मे इति श्लोकेन भावयेत्।

विशुद्धौ - ओं ऐं क ए ई ल ह्रीं ओं ह्रीं श्रीं नमः। ओं ह्रीं परं ज्योतिः हंस हंस व्योम व्योम व्योम्ना शक्ति क्लीं हसकहल ह्रीं श्रीं फ्रें खं शिवस्वरूप ज्योतिरानन्द सौः सकलह्रीं श्रीं शं नृत्तप्रकाशानन्दनाथ रक्तपादुकां पूजयामि श्रीं ह्रीं शिवायै नमः इति जपन्,

अरुणां करुणातरङ्गिताक्षीं धृतपाशाङ्कुशपुष्पबाणचापाम् ।
अणिमादिभिरावृतां मयूखैरहमित्येव विभावये भवानीम्।

इति दशशतदलपद्मे इति च भावयेत्।

आज्ञाचक्रे च, ओं श्रीं ह्रीं क्लीं ऐं सौः - ओं ह्रीं श्रीं - ऐं - क एई ल ह्रीं - सौः ऐं क्लीं ह्रीं श्रीं ओं - नमः ओं श्रीं ह्रीं क्लीं ऐं सौः - ओं ह्रीं परं ज्योतिः हंस हंस व्योम व्योम व्योम्ना शक्ति - सौः ऐं क्लीं ह्रीं श्रीं ओं - ओं श्रीं ह्रीं क्लीं ऐं सौः - क्लीं - हसकहलह्रीं - सौः ऐं क्लीं ह्रीं श्रीं ओं - फ्रें खं - ओं श्रीं ह्रीं क्लीं ऐं सौः - सौः - सकलह्रीं - सौः ऐं क्लीं ह्रीं श्रीं ओं शं ओं नृत्तात्मने प्रकाशानन्दनाथ रक्तपादुकां पूजयामि - ओं ह्रीं शिवायै नमः । इति जाप्त्वा दशशत दलपद्मे इति आत्मनाथं ब्रह्मरन्ध्रगतषोडशान्ते भावयेत् । तत्र तत्र लमित्यादिपञ्चपूजाः आत्मसमर्पणं च कुर्यात्।

(पुनर्निवेद्यते - कोशगतं मन्त्रस्वरूपं यथादृष्टं अत्र प्रदर्शितं, गुरूपदेशं तेन योगक्रमे मार्गप्रदर्शनं च विना दुःसाधमेव।)

।। श्री गुरुचरणारविन्दार्पणमस्तु ।।

——*——

